॥ तत्र धीराप्रगल्भाया रुपोदाहरणम् ॥

यद्वाचः प्रचुरोपचारचतुरा यत्सादरं दूरतः
प्रत्युत्थानमिदं स्वहस्तनिहितं यच्छिन्नमप्यासनम् ।
उत्पश्यामि यदेवमेव च मुहुर्दृष्टिं सखीसंमुखीं
तच्छङ्के तव पङ्कजाक्षि बलवान्को ऽप्यप्रसादो मयि ॥ ७७ ॥[6]

॥ अथ कृतदोषाप्रगल्भोदाहरणम् ॥

यत्पाणिर्न निवारितो निवसनग्रन्थिं समुद्ग्रन्थय-
न्भ्रूभेदो न कृतो मनागपि मुहुर्यत्खण्डमाने ऽधरे ।
यन्निःशङ्कमिवार्पितं वपुरहो पत्युः समालिङ्गने
मानिन्या कथितो ऽनुकूलविधिना तेनैव मन्युर्महान् ॥ ७८ ॥[10]

॥ अथ मध्याप्रगल्भाधीरालक्षणम् ॥

मध्या प्रतिभिनत्त्येनं सोल्लुण्ठैः साधुभाषितैः ।
अधीरा तु रुषा हन्ति संतर्ज्य दयितं यथा ॥ ७९ ॥

[1]) *om* AE, D *om.* तत्र B °ल्भाया लक्षणं C तत्र धीरायाः प्रग° D धीरायाः प्रगल्भायाः रु° [2]) C यद्वाचश्चतु° AE यत्साग्रहं D यत्संभ्रमा [3]) A °हस्त न हि° C °हृत [4]) E °हि. A °सम्मुख B °सन्मुखीं C °सन्मुखा D °यून्मुखी E °सन्मुखा [5]) BE तत् शके E कि तव [6]) *om.* ADE, BC *om.* अथ C कृतदोषे प्रियतमे रतौ सर्वदुष्कायया: (sic) प्रगल्भाय (sic) उदाहरण [7]) AC °तो पि वसन° D °द्ग्रंथन- [8]) A °मङ्गो C °मगो E °गपि तथा यत्खड्य° [9]) D यन्नीशकनिवा° AC यन्निन° [10]) D मानिन्या. [11]) *om* AE; B *om* अधीरा C °धीरलक्षणोयोदाहरणो D margin मध्याप्रगल्भालक्षण In B °ल्भाम° is corr. from °ल्भोदाहरण [12]) C प्रतिभणत्येन A सोलुण्ठं C सोल्लुठ E सोल्लुठं C चाटुभा° [13]) AD अधीरा पुरुष C च रुषा E परुषं

॥ अथ मध्याप्रगल्भोदाहरणम् ॥

कृतं मिथ्यावादैर्विरम विदितः कामुक चिरा-
त्प्रियां तामेवोच्चैरभिसर यदीयैर्नखपदैः ॥
विलासैश्च प्राप्तं तव हृदि पदं रागबहुलै-
र्मया किं ते कृत्यं ध्रुवमकुटिलाचारपरया ॥ ८० ॥

॥ अथाधीराप्रगल्भोदाहरणम् ॥

सा बाढं भवतेक्षितेति निविडं संयम्य बाह्वोः स्रजा
भूयो द्रक्ष्यसि तां शठेति परुषं निर्भर्त्स्य संतर्ज्य च ।
आलीनां पुर एव निह्नुतिपरः कोपाद्रणन्नूपुरं
मानिन्या चरणप्रहारविधिना प्रेयानशोकीकृतः ॥ ८१ ॥

एकाकारमता मुग्धा पुनर्भूश्च यतो ऽनयोः ।
अतिसूक्ष्मतया भेदः कविभिर्नोपदर्शितः ॥ ८२ ॥

मध्या पुनः प्रगल्भा च द्विविधा परिभिद्यते ।
एका ज्येष्ठा कनिष्ठान्या नायकप्रणयं प्रति ॥ ८३ ॥

1) *om.* ACE; D *om.* अथ 2) A अलं मि° ACDE विदितं 3) B तामेवेच्चैःर° E °वोचेर° 4) AE °बहुले 5) मया ते किं कु 6) *om* AE; C ॥ इ (i. e. इति) मध्याप्रगल्भोदाहरणं ॥ अथ धीराप्रगल्भोदाहरणं ॥ D अधीरा प्रगल्भा उदा° (*om.* अथ) 7) B वाढ D वार्ट E वादं D भवतः प्रियेति *cdd.* निविडं (D °डु) A वाह्नोः D वद्धः 8) CD द्रक्षसि E *om.* निर्भ° B संभाष्य D twice संतर्ज्यं 9) B कोपाच्चलन्नू° 10) D कामिन्या B 1. hd. °न्याश्चर° C adds: ॥ इति धीराप्रगल्भोदाहरणं । प्रियं शठं प्रति । 12) D °कारा मता D ततो 13) C अनसू° भेदे A कविभिर्नं प्रकाशितः C °भिर्न प्रदर्शितः E °भिर्नात्र दर्शितः 13) A अध्या C मुग्धा A °ल्भा वा त्रिविधा परिगद्यते B द्विधासौ D द्विधा सापि च भिद्यते E द्विधा सा परि° 14) C adds: अथ मध्याप्रगल्भयो नयिकस्य (sic) चेष्टामाह

उपरोधात्तथा स्नेहात्सानुरागो ऽपि नायकः ।
चेष्टते तां प्रति प्रायः कलासु कुशलो यथा ॥ ८४ ॥

॥ तदुदाहरणम् ॥

त्वदक्षिणी कुवलयबुद्धिरेत्यली
रुणध्म्यहं तदिति निमील्य लोचने ।
ततो भृशं पुलकितगण्डमण्डलां
युवापरां निभृतमचुम्बदङ्गनाम् ॥ ८५ ॥

॥ अथ स्वकीयालक्षणम् ॥

संपत्तौ च विपत्तौ च मरणे या न मुञ्चति ।
सा स्वीया तां प्रति प्रेम जायते पुण्यकारिणः ॥ ८६ ॥

॥ अथान्यदीयाद्विधालक्षणम् ॥

अन्यदीया द्विधा प्रोक्ता कन्योढा चेति ते प्रिये ।
दर्शनाच्छ्रवणाद्वापि कामार्तो भवतो यथा ॥ ८७ ॥

[1]) E °रागापि नायिका [2]) चेष्टेत E कुशला [3]) om. ADE; C adds च [4]) B त्वद्द° D ° त्यनीता [5]) A रुणाद्म्यहं C ° घ्य° [6]) B ° मंडलीं C ° ला [7]) A युवाप° B °मभुंचदंगनां corr. in margin. After this st. D ins. एकत्रासनसंगते etc. = Amaru st. 16 (Ind. Spruche no. 2937; v. 2 निमोल्य हसितक्रो° v. 3 स्नेहोल्ल°) [8]) om. ADE; C om. अथ C भकोया° [9]) C भरणे च विमुंचति D च न E पि न [10]) BCD पा E य [11]) om. ADE; C ॥ अथ परकीयालक्षण ॥ द्वैविध्यं च । [12]) B यान्यदीया C तत्प्रिये D मे मते [13]) D दर्शनात् श्रवणाच्चापि E दर्शनात श्रव° C° च्छ्राव°

॥ अथ कन्योदाहरणम् ॥

किमपि ललितैः स्निग्धैः किं चित्किमप्यभिकुञ्चितैः
किमपि वलितैः कन्दर्पपून्हसद्भिरिवेक्षणैः ।
अभिमतमुखं वीक्षां चक्रे नवाङ्गनया तथा
[5]ललितकुशलो ऽप्यालीलोको यथातिविसिस्मिये ॥ ८८ ॥

॥ अथ कामार्तान्यदीयाकन्योदाहरणम् ॥

निशमय्य बहिर्मनोरमस्वरमैक्षिष्ट तथापरा यथा ।
तिलमात्रकमप्यभून्न हि श्रवणेन्दीवरलोचनान्तरम् ॥ ८९ ॥

॥ अथ प्रियदर्शनादधिगतरतिसुखपरवधूदाहरणम् ॥

[10]कस्याश्चित्सुभग इति श्रुतश्चिरं य-
स्तं दृष्ट्वाधिगतरतेर्निमीलिताक्ष्याः ।
निस्पन्दं वपुरवलोक्य सौविदल्लाः
संतेपुर्विधुरधियो निशान्तवध्वाः ॥ ९० ॥

[1]) *om.* ADE; BC *om.* अथ C प्रियदर्शनकामार्तान्यदीयकन्योदा° [2]) E चलितैः E 1, hd. वलि° corr. 2. hd. AE °च्यति° C *om.* भि [3]) A चलि° D सलि° A कन्देपृन्वेहँस° D °र्पपु ह° [4]) B °गणाया, above ग्रा is written न [5]) A कलनकुशलो D °सिस्मरे E °सिस्मये [6]) *om.* ADE; BC *om.* अथ, C °दीयक° [7]) D विनिशम्य BD वहि° C *om.* वहिर् BC °मंनोरमं D °मंनोगतं B स्वरमैक्षिष्ट corr. in margin, C प्रियमैक्षिष्ट D चिरमैक्षिष्ट [8]) A तृणमा° D °न्दीवर° [9]) *om.* ADE; C °नाधिगतमुखपर° [10]) A कस्यास्त्वित्सुभग इति चिरं श्रुतो यस्तं [11]) D दृष्ट्वाप्यधिकतरं निमी° E दृष्ट्वा विग° C °क्ष्या [12]) D निष्पंदं [13]) C °वध्वाः

॥ गुणश्रवणादत्यन्तानुरागिणी परवधू स्वचित्तं प्रत्याह ॥

कार्श्यजागरसंतापान्यः करोति श्रुतो ऽप्यलम् ।
तमेव दुर्लभं कान्तं चेतः कस्माद्दिदृक्षसे ॥ ९१ ॥

साक्षाच्चित्रे तथा स्वप्ने तस्य स्याद्दर्शनं त्रिधा ।
देशे काले च भंग्या च श्रवणं चास्य तद्यथा ॥ ९२ ॥

॥ तत्र साक्षात् ॥

सत्यं सन्ति गृहे गृहे प्रियतमा येषां भुजालिङ्गन-
व्यापारोच्छलदच्छमोहनजला जायन्त एणीदृशः ।
प्रेयान्को ऽप्यपरो ऽयमत्र नियतं दृष्टे ऽपि यस्मिन्वपुः
स्वेदोज्जृम्भणकम्पसाध्वसमुखैः प्राप्नोति कां चिद्दशाम् ॥ ९३ ॥

॥ अथ चित्रगतसुभगमवलोक्य स्वसखीं प्रति स्वरूपमाचष्टे ॥

चित्रं चित्रगतो ऽप्येष ममालि मदनोपमः ।
समुन्मूल्य बलाल्लज्जामुत्कण्ठयति मानसम् ॥ ९४ ॥

[1]) *om.* ADE; C °स्तव° C प्रति प्राह [3]) A दुर्भगं E °हृदयमे B adds, ॥ परवधूसुभगा त्रिधा ॥ [4]) A साक्षात्स्वप्ने तथा चित्रे D °र्शनं यथा [5]) *om.* C: D काले तथा भ° D *om.* 2. च A चास्य [6]) *om.* ADE, C °द्यथा [7]) A प्रणयिनो D °लिंगनं [8]) E व्यापा । राउच्छलद° A ध्यायन्त [9]) AC सुकृती i. of नियतं C दृष्टो E तस्मि° [10]) A °ज्जृम्वण° [11]) *om.* AE, B *om.* from स्व° C °मवालोक्य स्वसखीं प्रति स्वस्वरू° D has: चित्रगतोदाहरणं अथ चित्रगतं सुभगमवलोक्य स्वसखीं प्रति स्व° [12]) A चित्रं चित्र° E प्येप: D ममालिर्म्मदनो° [13]) D समुन्मील्य E बलान् ल A *om.* ति

॥ अथ मुग्धायाः स्वप्नसमागते प्रियतमे प्रणयकोपविलासलसच्चेष्टितोदाहरणम् ॥

मुग्धा स्वप्नसमागते प्रियतमे तत्पाणिसंस्पर्शना-
द्रोमाञ्चाञ्चितया शरीरलतया संकूच्य कोपात्किल ।
मा मा वल्लभ संस्पृशेति सहसा शून्यं वदन्ती मुहुः
सख्या नो हसिता सचिन्तमसकृत्संशोचिता प्रत्युत ॥ ९५ ॥

॥ सौधादिप्रवेशान्नायकमवलोक्य रहः सहचरी मुग्धां प्रति कथयति ॥

स्फारस्फुरत्प्रदीपं सौधं मधु सोत्पलं कलं गीतम् ।
प्रियसखि सकलमिदं तव विफलं यदि नो वसेत्सोऽत्र ॥ ९६ ॥

॥ अथ परमाह्लादकारिचन्द्रोदयादिकमासाद्य रहः सहचरी तदभिप्रायमाचष्टे ॥

विकसति कैरवनिकरे सरति च सरसीसमीरणे सुतनु ।
चुम्बत्यम्बरमिन्दौ तव तेन विना रतिः कीदृक् ॥ ९७ ॥

॥ अथ भङ्गीभणितेरुदाहरणम् ॥

अञ्जननिकरस्तु दृशोस्तव कुचयोः पत्त्रभङ्गकं च वृथा ।

1) *om.* ADE BC *om.* अथ C °गमे C प्राणयकोपविलालसचेष्टि° 2) C °गमे A °सन्दर्शना- E °संदर्शने रो° 3) C °चांचितशरीर° A संयोज्य D संकूच्य E संकुच्य 4) AD मा मां E मा मा सस्पृश मल्लभेति D सून्यं E शून्ये B वर्दती D वदती 5) C सचितमहसरस° E °त्संसूचिता 6) *om.* ADE; C °प्रदेशारामणीयक° B सहचरीं C *om.* प्रति 7) E स्फारत्स्फु° A °रस्फुरत्प्र° A, B 1. hd., CE °तं च ACE कलगी° 8) A *om.* तव A सफलं भवेद्यदि सो त्र C सफल यदि दृश्यते सो त्र D सफल किल (sic) यदि भवे सो ऽयत्र E सकल खलु यदि भवे न सो ऽत्र B वसेत्सो त्र 9) *om.* ADE; E ॥ अथ सहचरी प्रति प्रोक्तं ॥ C °या-दिदमा° 10) A विकसित° A °समेरणे 11) C तन विरतिः 12) *om.* ADE, C °भणितेरु° 13) A भजन° B 1. hd. °निकरवस्तु corr. 2. hd. C अजनिरस्तु दृशोस्ते E अजनिरस्तु दृशास्ते A कुचयोरचोन्नतिरल मा भवतु । C कुचयोरभवनिरलभं व तु मुग्धे E कुचयोरभवनिरलंभवक मुग्धे

यदि दृश्यते न स युवा निर्भरमालिंग्यते नो वा ॥ ९८ ॥

॥ अथ प्रियसमागतान्यदीयकन्यास्वरूपनिरूपणम् ॥

द्रष्टुं वक्तुं च नो कन्या रक्ता शक्नोत्यमुं स्फुटम् ।
पश्यन्तमभिजल्पन्तं विविक्तेऽपि ह्रिया यथा ॥ ९९ ॥

॥ तथैवोदाहरणम् ॥

कामं न पश्यति दिदृक्षत एव भूम्ना
नोक्तापि जल्पति विवक्षति चादरेण
लज्जास्मरव्यतिकरेण मनोऽधिनाथे
बाला रसान्तरमिदं ललितं बिभर्ति ॥ १०० ॥

विज्ञातनायिकाचित्ता सखी वदति नायकम् ।
नायको वा सखीं तस्याः प्रेमाभिव्यक्तये यथा ॥ १०१ ॥

॥ तत्र नायकं प्रति नायिकाभिप्रायसूचकवाक्यमेवोदाहरणम् ॥

कण्टकिततनुशरीरा लज्जामुकुलायमाननयनेयम् ।
तव कुमुदिनीव वाञ्छति नृचन्द्र बाला करस्पर्शम् ॥ १०२ ॥

1) A स हि दृ° न हि युवा C om. न D स न 2) om. ADE; C om. प्रिय C °दीक° 3) A रन्तुं C रतुं D रतुं 4) A पश्यन्तं भि° C °मपि ज° A विवक्ते AC °क्ते लज्जया यथा 5) om. ADE, B अथ त° C तथैव तदुदा° 6) C हृदि क्षत एव E om. from त एव to ति l. 2 7) D चाघरेण 9) C adds: ॥ अथ सखीवाक्य ■ ॥ 10) BE °नायका° C °चित्ता 11) E प्रेम्नोऽभि° 12) om. AC; B ॥ तत्र नायकसखी प्रति नायिकोचे ॥ D om. वाक्य 13) B °राल्लज्जा° 14) C कुमुदीव D कुमुदिनीवाकाङ्क्षति

॥ ततः सखीं प्रति नायकवाक्यम् ॥

संतापयन्ति शिशिरांशुरुचो यदेते
संमोहयन्ति च विनिद्रसरोजवाताः ।
यत्स्विद्यते तनुरियं च तदेष दोषः
⁵सख्यास्तवैव सुतनु प्रचुरत्रपायाः ॥ १०३ ॥

॥ अथ मुग्धाचेष्टितलक्षणम् ॥

अपश्यन्तीव सा कान्तं स्फारिताक्षी निरीक्षते ।
दूरादालोकयत्येव सखीं स्वजति निर्भरम् ॥ १०४ ॥
निर्निमित्तं हसन्ती च सखीं वदति किं चन ।
¹⁰सव्याजं सुन्दरं किं चिद्गात्रमाविष्करोति च ॥ १०५ ॥

सख्या प्रस्थापितां मालां काञ्च्यादि रचयेत्पुनः ।
चेष्टां च कुरुते रम्यामङ्गभङ्गैः शुभैर्यथा ॥ १०६ ॥

॥ अथ प्रियतमेऽनुरागदृष्टिविशेषोदाहरणम् ॥

¹) *om.* ADE; B तत्र ²) A यत्ताप° E वयताप° D °रांशुकरा B margin. corr. यदेताः C यदेते ³) DE मा मोह° D सरोजविनिद्रवाताः ⁴) B, C l. hd. यत्स्विद्यते D स एव दोष. E °रिय स च दोप एव ⁵) *om* ADE; B *om.* अथ BC °चेष्टितोदाहरण ⁷) A अपश्यन्तं तु कामार्तं C अपश्यत च D अपश्यनी तु E प्रपश्यतं त्रु C स्फारोता° ⁸) A °यत्येव CE °यत्येपा B °लोकयत्यत्र C सखीस्वजन ⁹) A वदन्तीव B हसंतीव ¹⁰) AE सव्याजसु° BCDE °वि:करोति ¹¹) C *om.* stanza 106; A सख्यापि स्या° B margin: स्वस्थानं स्थापयेन्मा D मख्योपपादिना E सख्यादिस्थापित माला A स्थापि बाला ¹²) A रम्यां सङ्गभङ्गैस्तु° ¹³) *om* AE; B ॥ प्रियतमे नुरागमाह ॥ C ॥ प्रियतमे नुरागाद° D ॥ प्रियतमे नुरागाभिव्यंजकादिविशे°

अभिमुखगते तस्मिन्नेव प्रिये बहुशो वद-
त्यवनतमुखं तूष्णीमेव स्थितं मृगनेत्रया ।
अथ किल चलद्दृष्टीलालोलं स एव तथेक्षितः
कथमपि यथा दृष्ट्या मन्ये कृतं श्रुतिलङ्घनम् ॥ १०७ ॥

॥ अथ प्रियतममुद्दिश्यानुरागाभिव्यञ्जकप्रियसखीसमालिङ्गनोदाहरणम् ॥

तिर्यग्वर्तितगात्रयष्टिविषमोद्वृत्तस्तनास्फालना-
त्त्रुट्यन्मौक्तिकमालया सपुलकस्वेदोल्लसद्गण्डया ।
दूरादेव विलोकयत्यभिमते तद्वक्त्रदत्तेक्षणं
दुर्वारस्मरया तया सहचरी गाढं समालिङ्गिता ॥ १०८ ॥

॥ उद्धतमन्मथोत्थचेष्टितोदाहरणानि श्लोकत्रयेणाह ॥

अनिमित्तं यद्विहसति निष्कारणमेव यत्सखीं वदति ।
दयितं विलोक्य तदियं शंसति तदधीनमात्मानम् ॥ १०९ ॥

प्रादुष्यद्भुजमूलकान्तिललितामुद्यम्य दोर्वल्लरीं
वल्गत्पीनपयोधरस्थलचलन्मुक्तावलीसुन्दरम् ।

1) AD यस्मिन्नेव 2) B त्यनवत° C °मे॰ास्थित 3) B चलल्लज्जा° 4) A दृष्टा C मन्ये दृष्ट्वा A कृति 5) om. ADE, BC om. अथ, B only: ॥ सहचरीसमालिंगनोदाहरणं ॥ 6) AB तिर्यंग्वक्रित° D °मो वृ° CDE °स्तन-त्रुट्यु° 7) A सुपुल° D सपुलक A °ट्गात्रया 8) A °यत्यं मि° C °मिहंते 9) ACE °स्मरतापया C प्रियसखी 10) om. ADE, B उद्यन्मन्मथचेष्टा श्लोकत्रयेण 11) E यद्धसति A om. ति BCE नि कार° AC om. यत् A यद्वदति 12) C तदिदं 13) E °कांतिकलातामु° D °कांतिलतिकामु° A °द्दच दो° 14) A °स्थल ल° C °चलान्मु° D °तुङ्गमु° E °तुलन्मु°

अङ्गुल्यग्रचलत्कलापवलयध्वानोपहूतस्मर
तन्व्याः कुञ्चितलोचनं विजयते तत्कर्णकण्डूयनम् ॥ ११० ॥

स्रजो ऽवतंसं रशनां च किं चित्प्रियं समालोक्य समासजन्ती ।
पुनस्तरां सा सुहृदो ददाति प्रत्यङ्गमावासमिव स्मरस्य ॥ १११ ॥

व्याजृम्भणोल्लसितदन्तमयूखजालं
व्यालम्बमौक्तिकगुणं रमणे मुदैव ।
ऊर्ध्वं मिलद्भुजलतावलयप्रपञ्च-
सत्तोरणं हृदि विशन्त्यपराध्युवास ॥ ११२ ॥

अन्योदापि करोत्येतत्सर्वमुद्धतमन्मथा
दुरवस्था पुनः कान्तमभियुंक्ते स्वयं यथा ॥ ११३ ॥

॥ तद्वचनोदाहरणम् ॥

उल्लंघ्यापि सखीवचः समुचितामुन्मृज्य लज्जामलं

1) BE अंगुल्या प्रचलत्क° B °कपोल° A °लापि° D °लापविलसत्स्वानोप° A °घस्यानो° C °स्वानो° E °त्कलापिवलयस्वानो° 2) A तन्व्या C सख्या. D तन्याः A °चनं समभवत्कर्णस्य क° 3) BCDE रसनां D तयालोक्य E सदालोक्य AC समाश्रयन्ती D समामृजती 4) D पुरस्तरा A प्रत्यग्रम° AC °शायाम 5) A °मयूखमाल- B °मरीचिजालं C °चाल E मयूपजाल 6) BD व्यतावि E व्यालं । वे C रभसेन CDF मुदेव 7) B ऊर्ध्वंमि° D ऊर्ध्वं लसद्भुजलतावतावलय° 8) A सन्तोरण D सतो° In A the r. विशत्य° is intimated. B वसत्य CE विशत्य° AC °रा व्युदासे E ऽध्यवास 9) C °तत्पूर्व° A °मुद्यत° B °मुद्भुत D °मुधन° A °धात् 10) D दुरावस्थं C °स्था च सा ABDE युङ्क्ते 11) *om.* ADE; B तद्वचने श्लोकः 12) A समुदितामुल्लङ्घ्य लज्जानदी B समुचितमुलृंग्य लज्जाभरं CE °तामुन्मूल्य E लज्जाम् (sic)

हित्वा भीतिभरं निरस्य च निजं सौभाग्यगर्व मनाक् ।
आज्ञां केवलमेव मन्मथगुरोरादाय नूनं मया
त्वं निःशेषविलासिवर्गगणनाचूडामणिः संश्रितः ॥ ११४ ॥

॥ एतस्यः प्रियदर्शने सुखानुभवस्वरूपम् ॥

चक्षुर्मीलति सानन्दं नितम्बः प्रस्रवत्यपि ।
वेपते च तनुस्तन्व्यास्तस्यास्तद्दर्शने यथा ॥ ११५ ॥

॥ तथैवोदाहरणम् ॥

मीलन्मन्थरचक्षुषा परिपतत्काञ्चीग्रहव्यग्रया
गाढानङ्गभरस्रवज्जघनया कम्पोपरुद्धाङ्गया ।
सर्वाङ्गैश्चट्टकारको ऽप्यबलया संकेतके कौतुका-
दास्तां रन्तुमहो निरीक्षितुमपि प्रेयान्न संभावितः ॥ ११६ ॥

॥ अथ नायकं प्रति मुग्धावस्थाभिव्यञ्जकसखीवचनेन लक्षणोदाहरणाचाह ॥

नाभियुंक्ते स्वयं कन्या मुग्धत्वाद्दुःस्थितापि तम् ।
तदवस्थां तु कान्ताय तत्सखी कथयेद्यथा ॥ ११७ ॥

[1]) C त्यक्त्वा E भित्वा [2]) B आज्ञा D °दाय मूर्द्धा मया [3]) A °विलास° E °लास सिवगणा° C °गणनं BE °मणी [4]) om. ADE; B ॥ अथ प्रियदर्शनानुषंगः ॥ C ° भवस्व° [5]) B दिगालोकास्यसञ्चोपो नितं प्रश्नवत्यपि° A नितम्बं [6]) E °स्तन्वी तस्या° [7]) om. ACDE [8]) D परिलसत्का° [9]) In B the r. गाढानन्द° is mentioned; AE °स्रवद्रमणया BD °श्रवज्ज° [10]) A सर्वाङ्गं च° B सर्वाणं C सर्वाभे E सर्वाणं CD °कारके E °कारकाऽप्य° [12]) om. ADE; B only ॥ नायक प्रति मुग्धावस्था ॥ C °व्यंजक° C °णोदाहरणोचाह [13]) BCD °युक्ते E °युंक्ति B °द्दुस्थि° CD °त्वाद्दुस्थि° A ताम् [14]) ACE तदवस्था A तत्सखे

निःश्वासेषु स्खलति कदलीबीजनं तापसंप-
न्नेत्राम्भोभिर्झटिति पतितैः सूच्यते तत्स्तनान्त ।
तस्याः किं चित्सुभग तदभूत्तानवं त्वद्वियोगा-
द्येनाकस्माद्वलयपदवीमङ्गुलीयं प्रयाति ॥ ११८ ॥

°अनन्यशरणा स्वीया स्वहार्या पराङ्गना ।
अस्यास्तु केवलं प्रेम तेनैषा रागिणां मता ॥ ११९ ॥

॥ अथ वेश्यालक्षणम् ॥

सामान्यवनिता वेश्या सा वित्तं परमिच्छति ।
निर्गुणेऽपि न विद्वेषो न रागः स्याद्गुणिन्यपि ॥ १२० ॥

[10]°तत्स्वरूपमिदं प्रोक्तं कैश्चिद्भूमो वयं पुनः ।
बलवत्यानया युक्त्या तासामप्यनुरागिताम् ॥ १२१ ॥

शृङ्गाराभास एव स्याद्यदि वा रागवर्जिता ।
तद्व्यापारोऽथ वा तासां स्मरः किं भक्षितो वृकैः ॥ १२२ ॥

[1]) BDE निश्वा° A निस्स्वासे सत्स्खलति A °बेजनं C om. संप E °म्भोभिः स्थगितपतितै. D न्नेत्राभोभिर्स्थिरनिपतितैं A °र्झटिति E °भि. स्थिमितिपतिते E सिच्यते क्षाहि स्त° A मूच्यते ˙ ˙ नान्तः B °ते च स्त° B तस्य°   [3]) E °योगं येना°
[5]) A स्वैया धनहार्या C चनहार्या A तेनैषां C रागिणो   [7]) om. BDE; A ॥ अथ वेश्या वर्ण्यते ॥   [9]) E पि न च द्वेषो A विद्वेष्यो AD नानुरागो गुणेष्वपि (D गुणि°) C न दोषः स्यान्नानुरागो गुणिन्यपि   [10]) A कश्चिद्ब्रूमो
[11]) A वलवन्त्या° CE वर्ण्यंत्यनया (C °त्या) A युक्त्या नासा° E तस्यामप्य° AE °राधिता   [12]) AC °रभास E °भाव D तां रागवर्जिता B °र्जिता
[13]) E न व्यापारो BCC वृकैः

तस्मात्तासामपि क्वापि रागः स्यात्किं तु सर्वदा ।
धनार्थं कृत्रिमैर्भावैर्ग्राम्यान्व्यामोहयन्ति ताः ॥ १२३ ॥

लिङ्गी प्रच्छन्नकामश्च नरंमन्यश्च षण्ढकः ।
सुखप्राप्तधनो मूर्खः पितृवित्तेन गर्वितः ॥ १२४ ॥

इत्यादीन्प्रथमं ग्राम्याञ्ज्ञात्वाकृष्य च तद्धनम् ।
अपूर्वा इव मुञ्चन्ति तानेतास्तापयन्ति च ॥ १२५ ॥

किं तु तासां कलाकेलिकुशलानां मनोरमम् ।
विस्मारितापरस्त्रीकं सुरतं जायते यथा ॥ १२६ ॥

॥ तदुदाहरणम् ॥

गाढालिङ्गनपीडितस्तनतटं स्विद्यत्कपोलस्थलं
संदष्टाधरमुक्तसीत्कृतमतिभ्रान्तभ्रु नृत्यत्करम् ।
चाटुप्रायवचो विचित्रमणितं घातैर्नखैश्चाङ्कितं
वेश्यानां धृतिधाम पुष्पधनुषः प्राप्नोति धन्यो रतम् ॥ १२७ ॥

1) B स्यात्कि न AC सर्वथा 2) A °ग्राम्यान्समोह° C °र्भावै ग्राम्यं भावै व्यामोहयति ता. E °ग्राम्य व्या° 3) B प्रच्छन्नमावश्च AC नरमन्यश्च A शण्टक. BC खडक. D षंडक E खडक 4) E मूर्षः B पितृवत्तेन E दर्प्पित. 5) B इत्यादि प्रथमं ज्ञात्वा सम्यक्कर्षति तद्धनं C इत्यादि प्र° ग्राम्यं ज्ञात्वाकृत्स्य च D °म प्राग्यान् नृत्काकृष्य च B इत्यादि प्र' ग्राम्या ज्ञात्वाकृ° 6) D मपूर्वमिव E मपूर्वानिव 7) C ° केलि. 8) A विस्मितताना पर° 9) om. ACDE 11) D संद° B °तमभि° C तमभिभ्रांत्या प्रनृत्य° D °तमभिभ्राम्यद्भ्रु E °तमभीभ्रातभ्रु 12) D corr. °मणितं D घातैः क्षतैश्चाङ्कितं E घातैरुरचाङ्कितं 13) A °धनुषा C °धनुषो AC धन्यो रतं सेवते

॥ पुनरपि वेश्याप्रशंसा श्लोकत्रयेण ॥

ईर्ष्या कुलस्त्रीषु न नायकस्य निःशङ्ककेलिर्न पराङ्गनासु ।
वेश्यासु चैतद्द्वितयं प्ररूढं सर्वस्वमेतास्तदहो स्मरस्य ॥ १२८ ॥

क्रुध्यत्पिनाकिनेत्राग्निज्वालाभस्मीकृतः पुरा ।
[6]उज्जीवितः पुनः कामो मन्ये वेश्याविलोकितैः ॥ १२९ ॥

आनन्दयन्ति युक्त्या ताः सेविता घ्नन्ति चान्यथा ।
दुर्विज्ञेयाः प्रकृत्यैव तस्माद्वेश्या विषोपमाः ॥ १३० ॥

॥ अथ नायिकानामानि ॥

स्वाधीनपतिकोत्का च तथा वासकसज्जिका ।
[10]अभिसंधिता विप्रलब्धा खण्डिता चाभिसारिका ॥ १३१ ॥

प्रोषितप्रेयसी चैव नायिकाः पूर्वसूचिताः ।
ता एवात्र भवन्त्यष्टावस्थाभिः पुनर्यथा ॥ १३२ ॥

॥ अथ स्वाधीनपतिकालक्षणम् ॥

यस्या रतिगुणाकृष्टः पतिः पार्श्वं न मुञ्चति ।
[15]विचित्रविभ्रमासक्ता सा स्वाधीनपतिर्यथा ॥ १३३ ॥

[1]) *om.* ACDE [2]) A इच्छा C कल° B नु [3]) B वेश्यासु C प्रसिद्धं [5]) A यज्जी° D पुनर्मारो A °वलोकनैः BC ° वलोकितैः D °विलोकनैः [6]) C °यत्यु° A युक्त्यास्ताम् B सेविताः C नान्यथा [7]) A तस्माद्वेष्या BD °पमा [8]) *om.* ADE; B अथात अष्टनायिकागाह C अत्र [9]) A °पतिकैका च E °पतिरुक्ता च A तथा · · सक° [10]) D *om.* अभि A *om.* ता E *om.* वि DE °ब्धा च C °ताभिचा° [11]) D चेति E नायका. [12]) D एता एवमवस्थ° [13]) *om.* ADE [15]) D विचित्रमंगना दृष्टा B °मासक्तः स्वाधीनपतिका यथा

॥ तयोदाहरणम् ॥

लिखति कुचयोः पत्रं कण्ठे नियोजयति स्रजं
तिलकमलिके कुर्वन्गण्डादुदस्यति कुन्तलान् ।
इति चटुशतैर्वारं वारं वपुः परितः स्पृश-
न्विरहविधुरो नास्याः पार्श्वं विमुञ्चति वल्लभः ॥१३३॥

॥ अथोत्कालक्षणम् ॥

उत्का भवति सा यस्याः संकेतं नागतः प्रियः ।
तस्यानागमने हेतुं चिन्तयत्याकुला यथा ॥१३५॥

॥ अथोत्कोदाहरणम् ॥

किं रुद्धः प्रियया कया चिदथ वा सख्या समुद्वेजितः
किं वा कारणगौरवं किमपि यन्नाद्यागतो वल्लभः ।
इत्यालोच्य मृगीदृशा करतले संस्थाप्य वक्त्राम्बुजं
दीर्घं निःश्वसितं चिरं च रुदितं क्षिप्ताश्च पुष्पस्रजः ॥१३६॥

॥ अथ वासकसज्जालक्षणम् ॥

[1]) *om.* ACDE [2]) BCDE पत्र [3]) A कुर्वंल्लागाढु° C कुर्वंन् रागोदु° D कुर्वंन्नर्वानुर° E क्.र्वन गर्गाद्रु° B °दुदस्य च [4]) C वयः A स्पृशइ [5]) B यस्या. C वास्या. B न मु चति [6]) *om.* ADE; B *om.* लक्षण [7]) A तत्वा ACE यस्या AE वासर्ं [8]) D तस्याः ना° D चितयंत्या [9]) *om.* cdd. [10]) C ममोद्वेजित. D ममोद्वे° E ममोहे° B °जितः [11]) A यन्नाद्यारतिवंल्लभः C यन्नागतो DE यन्नाद्यागतो [12]) D °लोच्य [13]) A निश्वतं B निस्वसितं C निश्वसितो D निःश्वश्सित E दीर्घन्नि श्वसितं C च रुचिर [14]) *om.* ADE; B वासकसय्याया ल°

भवेद्वासकसज्जासौ सज्जिताङ्गरतालया ।
निश्चित्यागमनं भर्तुर्द्वारेक्षणपरा यथा ॥१३७॥

॥ अथ वासकसज्जोदाहरणम् ॥

दृष्ट्वां दर्पणमण्डले निजवपुर्भूषां मनोहारिणीं
[6]दीपार्चिःकपिशं च मोहनगृहं श्रस्यत्कुरङ्गीदृशा ।
एवं नौ सुरतं भविष्यति चिरादद्येति सानन्दया
कामं कान्तदिदृक्षया विलसिता द्वारे दृगारोपिता ॥१३८॥

॥ अथाभिसंधितालक्षणम् ॥

निरस्तो मन्युना कान्तो नमन्नपि यया पुरा ।
[10]दुःस्थिता तं विना साभिसंधिता कथिता यथा ॥१३९॥

॥ अथाभिसंधितोदाहरणम् ॥

यत्पादप्रणतः प्रियः परुषया वाचा स निर्वासितो
यत्सख्या न कृतं वचो जडतया यन्मन्युरेको धृतः ।

1) D भवेद्वा सज्जा मा D °लता° A °ग्रये 2) A निश्चत्या° D °क्षया परा 3) *om.* ACDE; B ॥ वासकशय्योदाहरणं ॥ 4) C *om.* मण्डले C °वपुरुषा 5) E °कपिशा B °गृहे E °गृहं तन्व्या कु° 6) D नः C सुतरां 7) B कामदिद° A तिलक्तिवा C तिलषिता DE °क्षयातिललिता (D °त) 8) *om.* ADE; B *om* लक्षणं 9) A यथा पुनः C पुरा यया B पुन· 10) B दु.खिता C °संधितेति मता यथा A कथिता बुधैः 11) *om.* CDE; B *om.* अथ A only ॥ यथा ॥ 12) A प्रिया D पतिः E पुरुषया B निर्भर्त्सितो D निर्वारितो 13) D यन्मन्यु इवाहृतः A वृतः

पापस्यास्य फलं तदेतदधुना यच्चन्दनेन्दुद्युति-
प्रालेयाद्रिसमीरपङ्कजबिसैर्गात्रं मुहुर्दह्यते ॥ १४० ॥

॥ अथ विप्रलब्धालक्षणम् ॥

प्रेष्य दूतीं स्वयं दत्त्वा संकेतं नागतः प्रियः ।
यस्यास्तेन विना दुःस्था विप्रलब्धा तु सा यथा ॥ १४१ ॥

॥ अथ विप्रलब्धोदाहरणम् ॥

यत्संकेतगृहं प्रियेण कथितं संप्रेष्य दूतीं स्वयं
तच्छून्यं सुचिरं निषेव्य सुदृशा पश्चाच्च भग्नाशया ।
स्थानोपासनसूचनाय विगलत्सान्द्राञ्जनैरश्रुभि-
र्भूमावक्षरमालिकेव रचिता दीर्घं रुदत्या शनैः ॥ १४२ ॥

॥ अथ खण्डितालक्षणम् ॥

कुतश्चिन्नागतो यस्या उचिते वासके प्रियः ।
तदनागमसंतप्ता खण्डिता सा मता यथा ॥ १४३ ॥

[1]) D प्रायस्तस्य फलं B यच्चंदनं दुह्यति C यच्चदनं दुधुति E यच्चदकिः धानो दुद्युति A °च्युति [2]) A प्रालेयांशु° CD °यांशु° E °यातु° A °बिषै° B °बिशै° CD °बिसै° E °बिशै° [3]) *om.* ADE; B *om.* लक्षणम् [4]) E प्रेस्य D गत्वा [5]) B दुस्था C दुत्वा D दुंस्था E दुःस्था प्रलब्धा साभवद्यथा BCD °लब्धा च [6]) *om.* ACDE [7]) In A the r. यत्सXतेत° is mentioned. E संप्रेदय [8]) B तत्सूंन्यं (sic) C हत्वान्यं D निषेव्य A *om.* सुद [9]) D °पायन° B °सू-चनाय A °सुभि- [10]) ACE लिखिता B निहिता BDE रुदंत्या C रुदत्याशत्या [11]) *om.* ADE; B *om.* लक्षणम् [12]) C यस्य D वासरे E वासिके [13]) D तदागमन° B °संप्राप्ता

॥ तयोदाहरणम् ॥

सोत्कण्ठं रुदितं सकम्पमसकृद्वचातं सवाष्पं चिरं
चक्षुर्दिक्षु निवेशितं सकरुणं सख्या समं जल्पितम् ।
नागच्छत्युचिते ऽपि वासकविधौ कान्ते समुद्विग्नया
[6]तत्तदिकं विदग्धुचितं मृगदृशा नो यत्र वाचां गतिः ॥ १४४ ॥

॥ अथाभिसारिकालक्षणम् ॥

या निर्लज्जीकृता वाढं मदेन मदनेन वा ।
अभियाति प्रियं साभिसारिकेति मता यथा ॥ १४५ ॥

॥ तयोदाहरणम् ॥

[10]नो भीतं तडितो दृशा जलमुचां तद्दर्शनाकांक्षया
नो गर्जिद्गणिता भृशं श्रुतिसुखं तद्भावि संचिन्त्य च ।
धारापातसमुद्भवा न च मता पीडा तदालिङ्गनं
वाञ्छन्त्या दयिताभिसारणविधौ तन्व्या परं तत्वरे ॥ १४६ ॥

॥ अथ प्रोषितपतिकालक्षणम् ॥

1) *om.* ACDE 2) B °सकृद्गात्रं; in margin r. of the text. ABCD सवाष्पं E सवाष्पो D चिरात् 3) A निरोपितं 4) D वासर° 5) CE *om.* तत् once B °नुज्झितं CDE °नुष्ठितं 6) *om.* ADE; B *om.* लक्षणम् 7) BD निर्लज्जा कृ° A गाढं BC वाढं D वाला ADE मदनेन मदेन D च A °सारिकीति B °सारिकाभिमता D °सारिका कथिता C only has अभियाति साभिसारिकेति मता ॥ 9) *om.* ACDE 10) A नोति A न दा instead of दृशा 11) A गर्जिगं° (sic) DE गर्जितगर्जिता C गर्ज्जंगणितं A °सखं C तद्भा सं° 12) A °समुद्भवा CD न गणिता ॥ न च मनाक् B °लिपनैर् 13) B गच्छन्त्या 14) *om.* ADE; B ॥ अथ प्रोषिता ॥

कुतश्चित्कारणाद्यस्याः पतिर्देशान्तरं गतः ।
दत्त्वावधिं भृशार्ता सा प्रोषितप्रेयसी यथा ॥१४७॥

॥ यथोदाहरणम् ॥

उत्क्षिप्यालकमालिकां विलुलितामापाण्डुगण्डस्थला-
द्विश्लिष्यद्वलयप्रपातभयतः प्रोद्यम्य किं चित्करौ ।
द्वारस्तम्भनिषण्णगात्रलतिका केनापि पुण्यात्मना
मार्गालोकनदत्तदृष्टिरबला तत्कालमालिंग्यते ॥१४८॥
निःश्वाससंतापसखीवचोभिश्चिन्ताश्रुपातादियुता सखेदा ।
वान्या प्रलब्धा गतभर्तृकोत्काभिसंश्रिता खण्डितया स-
हात्र ॥१४९॥

विचित्रमण्डना हृष्टा भवेत्स्वाधीनभर्तृका ।
तथा वासकसज्जापि सा किं त्वागन्तुकप्रिया ॥१५०॥

कुलजान्याङ्गना वेश्या त्रिधा स्यादभिसारिका ।
यथैवोक्तास्तथैवान्याः स्वाधीनपतिकादयः ॥१५१॥

[1]) C कुतश्चि° [2]) D *om.* सा D गत्वावधि B मता [3]) *om.* ACDE [5]) A °द्वलय·····भयतः ॥ ACD प्रोद्यम्य B का चित्क° [6]) D °विपन्न° [7]) B °मालिंगिता ॥ adds ॥ इति नायकोदाहरणं ॥ C ॥ इत्यष्टनायिकोदाहरणानि ॥ [8]) BCE निश्वा° D °सखीजनोक्तिः चिन्ताश्रु° E °सखीवचोक्ति° B °चोभिर्भृशाश्रु° A °सुतापादि° C °युताः सखेदाः [9]) A वाच्य B या विप्र° C ता विप्र° C °श्रिताः [10]) CE °वासका स° [11]) E स्यात्कि त्वागन्तु° D °पि किं तु सागंतु° कप्रिया [12]) A कुलटा° [13]) C °क्ता नया नान्या D °स्तथा चान्या E °वान्या D °वात्मा: D °पतिका तथा

॥ अथ स्वकीयापरकीयाभिसारिकालक्षणम् ॥

कुलजा संवृता त्रस्ता सव्रीडा तद्गृहं व्रजेत् ।
नायकं परनारी तु समन्तादनवेक्षिता ॥१५२॥

॥ अथ वेश्याभिसारिकालक्षणम् ॥

[5]सखीयुक्ता मदाधिक्यात्स्फारिताक्षी त्वशङ्किता ।
सशब्दाभरणा कामं वेश्या सरति नायकम् ॥१५३॥

त्रयोदशविधा स्वीया द्विविधा च पराङ्गना ।
एका वेश्या पुनश्चाष्टावस्थाभेदतो मताः ॥१५४॥

पुनश्च तास्त्रिधा सर्वा उत्तमामध्यमाधमाः ।
[10]इत्थं शतत्रयं तासामशीतिश्चतुरुत्तरा ॥१५५॥

॥ अथोत्तमालक्षणम् ॥

दोषानुरूपकोपा यानुनीता च प्रसीदति ।
रज्यते च भृशं नाथे गुणहार्योत्तमेतिसा ॥१५६॥

[1]) *om.* ADE; C °परकीयावेश्याभि° [2]) A कुलटा ABC सव्रीडं A च द्रुतं, ( sic वृ° E च द्रुतं व्रजेत [3]) E च A सदान्यैरनवीक्षिता D सर्वदान्यैर वीक्षिता E सदान्यैरप्यवीक्षिता In B margin the gloss दृष्टा is written [4]) *om.* ACE [6]) सख्या यु° D °युता मदविधा स्फा° C °धिक्या स्फा° AE °क्षी न श° C °क्षी चमत्कृता D °क्षी नराङ्किता [7]) From this line to stanza 164, 2 lost in A [8]) D °भेदता गताः E °भेदतोऽत्र ताः AB मता [9]) E तास्त्रिधा भिन्ना CD उत्तमाधममध्यमा [10]) B °त्थं; E त्थं [11]) *om.* DE [12]) E तु प्रसी° [13]) C °त्तमा यथा

॥ अथोहमोदाहरम् ॥

कान्ते किं कुपितासि कः परजने प्राणेश कोपो भवेद्
को ऽयं सुभ्रु परस्त्वमेव दयिते दासो ॥ स्मि किं ते परः ।
इत्युक्त्वा प्रणतः प्रियः क्षितितलादुत्थाप्य सानन्दया
नेत्राम्भःकणिकाङ्किते स्तनतटे तन्व्या समारोपितः ॥ १५७ ॥

॥ अथ मध्यमालक्षणम् ॥

दोषे स्वल्पे ऽपि या कोपं धत्ते कष्टेन तुष्यति ।
प्रयाति कारणाद्रागं मध्यमा सा मता यथा ॥ १५८ ॥

॥ अथ मध्यमोदाहरणम् ॥

प्रस्फारस्फुरिताधरापि विलसद्गण्डस्थलप्रस्खल-
द्धर्माम्भःकणिकापि भङ्गुरतरभ्रूभेदभृत्याप्यलम् ।
पादान्तप्रणते प्रिये प्रकटयत्यन्तःप्रसादं प्रिया
केशान्नूपुरमण्डलीशबलितानुन्मोचयन्ती शनैः ॥ १५९ ॥

॥ अथाधमालक्षणम् ॥

1) *om.* CDE, B *om.* अथ 2) C किं ॥ परिजने 3) B परस्त्वमेव 4) C °स्का D °स्का E °क्ता E प्रणतं C *om.* तः D पतिः C °दुत्थाय सावंदया 5) D °काञ्चिते In D the st. बाले नाथ Amaru v. 53 (=Ind. Spruche 4443) is interpolated 6) *om* DE; C ॥ अथ मध्यलक्षणं ॥ 7) In B st. 158 ॥ *om.* C मुचति E मुंचति 9) *om.* cdd. 10) B *om.* प्र C प्रस्फारस्फु° D °धरा, प्रविलसद्र° 11) [illegible] °स्तर CE °भ्रू भंग° 12) D पादाते प्र° E पादातःप्र° C प्रियो 13) D °ले श° BCD °शावलि° 14) *om.* DE; [illegible] *om.* लक्षणम्

या कुप्यति विना दोषैः स्निह्यत्यननुनयं विना ।
निर्हेतुकप्रवृत्तिश्च चलचित्तापि साधमा ॥ १६० ॥

॥ अथाधमोदाहरणम् ॥

यत्राधःकृतकामकार्मुककथोद्भ्राम्यद्भ्रुवोर्विभ्रम
सद्यःप्रोद्गतचन्द्रकान्तिजयिनी यस्मिन्कपोलच्छविः ।
यत्र स्वेदकणावलुप्तमहिमा हारो ऽप्युरोजस्थले
को ऽयं मानिनि मत्प्रसादविमुखः प्रत्यग्रमानग्रहः ॥ १६१ ॥

जातिकालवयो ऽवस्थाभावकन्दर्पनायकैः
इतरा अप्यसंख्याः स्युर्नोक्ता विस्तारभीतितः ॥ १६२ ॥

इत्यादि सकलं ज्ञात्वा स्वयं चालोक्य तद्विदाम् ।
कवीनां च विशेषोक्त्या ज्ञातव्याः सकला इमाः ॥ १६३ ॥

रोमाञ्चवेपथुस्तम्भस्वेदनेत्राम्बुविभ्रमाः ।
वाच्याः संभोगशृङ्गारे कविना नायिकाश्रिताः ॥ १६४ ॥

संबन्धिमित्रद्विजराजतीक्ष्णवर्णाधिकानां प्रमदा न गम्याः ।

1) C स्निग्धत्यनुयं 2) D °वृत्तिश्च C °श्च लचि° E °चित्तेति E साधमा; 3) *om.* CDE 4) In C काम twice 5) C °चंप्रविबज° D °चंद्रविबम° E °चंद्रविबज° 6) B °वलिप्त° C °कर्णोविलुप्त° D °णावुलुप्त (sic) 7) B कामिनी मत्प्रणामवि° 8) C वयो twice E जातिरूपकलावस्था 9) B पुनस्ता ग्रन्य° DE विस्तर° 10) D चालोच्य B ज्ञातव्या 13) Here A recommences. A वेश्यास्सं° B कविनायका° D कविनायिका° ACE नायका° 14) C *om.* राज C °तीक्षा° D °हीन° A °वर्णादिकानां

व्यङ्गास्तथा प्रव्रजिता विभिन्नमन्त्राश्च धर्मार्थमनोभवज्ञैः ॥ १६५ ॥

अनेन मार्गेण विशेषरम्यं संभोगशृङ्गारमिमं वितन्वन् ।
भवेत्कविर्भावरसानुरक्तो विदग्धगोष्ठीवनितामनोज्ञः ॥ १६६ ॥

॥ इति श्रीमद्रुद्रभट्टविरचिते शृङ्गारतिलकाख्ये काव्या
लंकारे संभोगशृङ्गारो नाम प्रथमः परिच्छेदः ॥

[1]) A श्यङ्गृपास्तया D व्यग्या° A °मित्नाश्च [2]) A रागेण A °रमनुं D विदिरवा [3]) E °रसानुविद्ध C °गावनि° [4]) B श्रीरुद्रविर° C श्रीरुद्रभट्ट° D श्रीरुद्रभट्ट° E श्रीभट्टरुद्रवि° BC °तिलकं D *om.* शृङ्गा° C *om.* काव्या° [5]) DE *om.* सम्भोग° नाम B °शृङ्गारे *om.* नाम C adds ॥ १ ॥ E समास·

|| अथ विप्रलम्भलक्षणम् ||

विप्रलम्भाभिधानोऽयं शृङ्गारः स्याच्चतुर्विधः

पूर्वानुरागो मानाख्यः प्रवासः करुणात्मकः || १ ||

| अथ पूर्वानुरागलक्षणम् ||

[5]दंपत्योर्दर्शनादेव प्ररूढगुरुरागयोः |

ज्ञेयः पूर्वानुरागोऽयमप्राप्तौ स भवेद्यथा || २ ||

|| अथ पूर्वानुरागान्वितनायिकावाक्योदाहरणम् ||

किं चन्दनै रचय मा च मृणालशय्यां

मा मा ममालि धुनु कोमलतालवृन्तम् |

[10]मुञ्चाग्रहं विकचपङ्कजयोजनेषु

तत्संगमः परमपाकुरुते स्मराग्निम् || ३ ||

|| अथ पूर्वानुरागावस्थास्थितनायकस्वरूपनिरूपणम् ||

[1]) E has before : श्री. नस्मे. तेभ्यः समस्तेभ्यो नमो गुरुभ्यः ; *om.* ADE; B *om.* अथ C विलंभ° [2]) A °भिधानो [3]) A प्रवाच्य × B प्रकाशः [4]) *om.* ADE [5]) CE समुत्पन्नानुरागयोः (C °ना°) [6]) E °प्राप्तो या दशा यथा B संभवे° [7]) *om.* ADE, B || अत्र पूर्वानुरागाख्यः विप्रलंभवतीवाक्यं रहः सहचरीं प्रति यथा || C ° गान्वितनायिकापद्यो° [8]) A किं चन्दनैरथ च मुञ्च मृ° C *om* च D °सत्या [9]) A म मा [10]) A °जदर्शनेषु [12]) *om.* ADE; B ||पूर्वानुरागाख्यविप्रलंभावस्था°

यत्सारैरिव पङ्कजस्य घटितं यच्चन्द्रगर्भादिव
प्रोत्कीर्णं यदनङ्गसायकशिखामासेत्र संवर्धितम् ।
यत्संसिच्य सुधारसैरिव रतेरास्थानभूमीकृतं
यद्भूयो ऽपि कदा सरोरुहदृशः पश्यामि तस्या मुखम् ॥४॥
मृणालकन्दलीचन्द्रचन्दनाम्बुरुहादिकम् ।
तत्रानयोः स्मरातङ्कशान्तये नैव सेवितम् ॥५॥

॥ अथ दशावस्था. ॥

आलोकालापसंरूढरागाकुलितचेतसोः ।
तयोर्भवेदसंप्राप्तौ दशावस्थः स्मरो यथा ॥६॥
अभिलापोऽथ चिन्ता स्यात्स्मृतिश्च गुणकीर्तनम् ।
उद्वेगोऽथ प्रलापः स्यादुन्मादो व्याधिरेव च ॥७॥
जडता मरणं चैव दशमी जायते ध्रुवम् ।
असंप्राप्तौ भवन्त्येतास्तयोर्दश दशा यथा ॥८॥

॥ अथाभिलापलक्षणम् ॥

व्यवसायो भवेद्यत्र याढं तत्संगमाशया ।
संकल्पाकुलचित्तत्वात्सो ऽभिलापः स्मृतो यथा ॥९॥

1) D यच्चन्द्रविवादव A °दिव° 2) B °शायक° C °सावक° 3) E रतिरा°
4) A यद्भूयो A सदा om. E 5) A मृणाली° ACD °कदली° E °लीचन्द
6) A °तङ्कं दामयेन्नैव 7) om. ACDE 8) A °हाग° 10) A om. stanzas
7 and 8 D स्यात्स्मृतिश्च 11) B प्रलाप 12) DE दशमं E जायते C मया
14) om. ADE; B °लापवत्या स° 15) BDE वाढ D °संगमेच्छया 16) AD
भिलापो (A वि° ) मतो

॥ तथोदाहरणम् ॥

प्रविशति यथा गेहे ऽकस्माद्बहिश्च विचेष्टते
वदति च यथा सख्या सार्धं सहासमितोत्सुका ।
दयितवदनालोके मन्दं यथा च चलत्यसौ
[5]मृगदृशि तथा तस्यां शङ्के स्मरेण कृतं पदम् ॥१०॥

॥ अथ चिन्तालक्षणम् ॥

कथं स वल्लभः प्राप्यः किं कुर्यां तस्य तुष्टये ।
कथं भवेदसौ वश्य इति चिन्ता भवेद्यथा ॥११॥

॥ तथोदाहरणम् ॥

[10]सत्यं दुर्लभ एष वल्लभतमो रागो ममास्मिन्पुनः
कोऽप्यन्योऽस्ति गुरुर्न चातिनिपुणाः सख्योऽस्य संबोधने ।
संचिन्त्येति मृगीदृशा प्रियतमे दृष्टे श्लथां मेखलां
बध्नत्या न गतं स्थितं न च गलद्दामो न वा संवृतम् ॥१२॥

॥ अथ स्मृतिः ॥

[15]द्वेषो यत्रान्यकार्येषु तदेकाग्रं च मानसम् ।

[1]) om. ACDE [2]) D has before: श्रीगणाधीपतये B यथाकस्माद्गेहे बहिश्च CD °द्बहि° E तस्माद्ब° [3]) C om. च B तथा D भृशं B सार्थं C °सिहोत्सुका [4]) AE दयितनयना° B om. च A वल° C तथापि वल° [5]) AE तथैतस्या CD तथैवास्यां [6]) om. ADE [7]) AD स कथं BE सिद्धये [8]) B वश्य [9]) om. ACDE [10]) C सत्यं वल्लभ एव दुर्लभतमो [11]) E को ऽप्यस्यातिपुरस्तं A पि D न i. of स्ति DE चापि नि BC °पुणः [13]) CD बध्नंत्या E बध्नंत्या [14]) om. ADE [15]) A द्वेष्यो न्यत्र च का° B द्वेष्ये C यथान्यदांषु E प्रद्वेषोऽन्यत्र का°

श्वासैर्मनोरथैश्चापि चेष्टा तत्स्मरणं यथा ॥१३॥

॥ तथोदाहरणम् ॥

इन्दुं निन्दति पद्मकन्दलदलीतल्पं न वा मन्यते
कर्पूरं किरति प्रयाति न रतिं प्रालेयधारागृहे ।
श्वासैः केवलमेव खेदिततनुर्ध्यायत्यसौ बालिका
यत्त्कोऽपि युवा सखि स्मरसुहृच्चेतस्यमुष्याः स्थितः ॥१४॥

॥ अथ गुणकीर्तनम् ॥

सौन्दर्यहसितालापैर्नास्त्यन्यस्तत्समो युवा ।
इति वाणी भवेद्यत्र तदिदं गुणकीर्तनम् ॥१५॥

॥ तथोदाहरणम् ॥

तद्वक्त्रं हसितेन्दुमण्डलरुचि स्फारं तदालोकितं
सा वाणी जितकामकार्मुकरवा सौन्दर्यमेतस्य तत् ।
इत्थं संततमालि वल्लभतमध्यानप्रसक्तात्मन-
श्चेतश्चुम्बितकालकूटमिव मे कस्मादिदं मुह्यति ॥ १६॥

॥ अथोद्वेग. ॥

[1]) E °नोरथैश्चा° A चेष्ट स्म° B चेष्टते स्मर° C चेष्टान ( i. e. चेष्टते ) E चेष्टा च स्मरणं व्यथा [2]) *om.* ACDE [3]) D पद्मकाडकदली° E पद्मरंदं कदली° [5]) D स्वासै AB खिद्यति तनु ( B °नु ) जाताप्यसौ E °तनुर्ज्जनित्यसौ [6]) D *om.* ऽपि BE ध्रुवं inst. of सखि [7]) *om* DE, A *om.* अथ add यथा C ॥ अथ गुणकीर्त्तनचेष्टालक्षणोदाहरणे ॥ [9]) ADE तदित्थं [10]) *om.* ACDE [11]) A °मण्डलमिति CDE °मंडलमतिस्फारं [13]) A मतमालि D °प्रसक्ता° [14]) A °श्चुम्बित का° [15]) *om.* DE; A *om.* अथ B °गलक्षणं C °गलक्षणोदाहरणे

यस्मिन्नम्यमरम्यं स्यान्न च हर्षाय किं चन ।
प्रद्वेषः प्राणितव्येऽपि स उद्वेगः स्मृतो यथा ॥१७॥

॥ तथोदाहरणम् ॥

अग्न्यागारं कलयसि पुरश्चक्रवाकीव चन्द्रं
बद्धोत्कम्पं शिशिरमरुता दह्यसे पद्मिनीव ।
प्राणान्धत्से कथमपि बलाद्गच्छतः शल्यतुल्यां-
स्तत्केनासौ सुतनु जनितो मान्मथस्ते विकारः ॥१८॥

॥ अथ प्रलापः ॥

बम्भ्रमीति मनो यस्मिन्नत्यौत्सुक्यादितस्ततः ।
वाचः प्रियाश्रिता एव स प्रलापः स्मृतो यथा ॥१९॥

॥ तथोदाहरणम् ॥

इत्थं तेन निरीक्षितं न च मयाप्येवं समालोकित-
स्तेनोक्तं सुभगेन तत्र न मया दत्तं वचो मन्दया ।
तत्सत्यं कथयालि किं स सुभगः कुप्येन्न मह्यं गत
इत्युक्त्वा सुदृशा कयापि वलितग्रीवं दृशौ स्फारिते ॥२०॥

1) B स्यात् न A हर्षो श 2) D सदेहः A प्रणि° B °तव्यो C °तव्य 3) *om.* ACDE 4) A °गारं and sup. रानं B °कारं 5) B गाढोत्कठा B दह्यवे 6) A चिराद्गच्छतश् A °तुल्यास् BD °तुल्यान् C °तुल्यां त° 7) A मन्म° 8) *om.* CDE; A ॥ प्रलापो यथा ॥ 9) A यस्मिन्यात्यौ° 10) A प्रियाश्र ता स्व स प्रलापो मतो 11) *om.* ACDE 12) C तं न BC स च B च स E मया सो प्येवमालो° A °कितः D °कितं 13) E तन्न च मया 14) B *om.* स B कुप्येत....इत्यु° B मय्युक्तकैर् D मह्यं चिराद् 15) A °रितौ

॥ अथोन्मादः ॥

श्वासप्ररोदनोत्कम्पवसुधोल्लेखनैरपि ।
व्यापारो जायते यत्र स उन्मादः स्मृतो यथा ॥ २१ ॥

॥ तथोदाहरणम् ॥

देवीवानिमिषेक्षणा विलिखति क्षोणीं श्वसित्युच्चकैः
किं चिद्ध्यायति निश्चलापि वलवद्रोमाञ्चिता कम्पते ।
रोदित्यङ्कगतां विलोक्य सुचिरं वीणामतिव्यापृता
स्वल्पैरेव दिनैरियं वरतनुः केनापि संशिक्षिता ॥ २२ ॥

॥ अथ व्याधिः ॥

संतापवेदनाप्रायो दीर्घश्वाससमाकुलः ।
तनूकृततनुर्व्याधिरष्टमो जायते यथा ॥ २३ ॥

॥ तथोदाहरणम् ॥

तापः शोषितचन्दनोदकरसः श्वासो विकीर्णोत्पलः
कर्पूराभिभवप्रचण्डपटिमा गण्डस्थले पाण्डिमा ।
म्लायद्बालमृणालनालललिता प्राप्ता तनुस्तानवं
तन्वंग्याः कथितः स्मरेण गुरुणा को ऽप्येष कष्टक्रमः ॥ २४ ॥

[1]) *om.* DE; A ॥ उन्माद ॥ B° दलक्षण [2]) D श्वास° A °प्ररोदनो° DE °धालेख° [3]) C °ते न्यत्र AC उन्माद A मतो [4]) *om.* ACDE [5]) E °क्षणं ■ श्वसुत्तु° [6]) D चिद्ध्यायति C निश्चिताति A °ला च D *om.* रि [7]) A °दूतां B °वृत्ता D °वृत्तां E °पृतिः [8]) A केनानुमति° [9]) *om.* ADE [10]) C *om.* प्रायो [11]) A कृता तनुतन्व्या° C तन्व° D तथा [12]) *om.* ACDE [13]) C शोषित° D °दकभर. A श्वासः वर्ण° B श्वासाविर्ण° C श्वासावर्ण° [14]) A कर्पूरगभितवस्त्र° B कर्पूरवनत्र प्रचंड° D °मतः प्र° [15]) A म्लायद्वा° DE °नालनलिता B °स्तावन [16]) AC °न्त्या A कथित° ABC कथित° D प्येव

॥ अथ जडता

अकाण्डे यत्र हुंकारो दृष्टिः स्तब्धा गता स्मृतिः ।
श्वासः समधिकः कार्श्यं जडतेयं स्मृता यथा ॥ २५ ॥

॥ तथोदाहरणम् ॥

दृष्टिर्निश्चलतारकाधरदलं श्वासैः कृतं धूसरं
प्राप्तं वासरचन्द्रबिम्बपदवीं वक्त्रं विनष्टा स्मृतिः ।
हुंकारः परमेक एव वचनस्थाने स्थितः सांप्रतं
मन्येऽस्याः कुसुमायुधः सशिबिरः प्रत्यङ्गमावासितः ॥ २६ ॥

॥ अथ मरणावस्था ॥

उपायैर्विविधैर्नार्या यदि न स्यात्समागमः ।
कन्दर्पशरभिन्नाया मरणं जायते ततः ॥ २७ ॥
पुंसो ऽपि हि भवन्त्येता दशावस्था मनोभवात् ।
मरणं किं स्वसौन्दर्यात्तयोः कैश्चिन्न बध्यते ॥ २८ ॥
अन्ये तदपि बध्नन्ति प्रत्युज्जीवनवाञ्छया ।
वृत्तानुवादे तच्छस्तमुत्पाद्यं प्रायशो न हि ॥ २९ ॥

1) *om.* DE; AB *om.* अथ B adds लक्षणं 2) A अकाले CDE दृष्टि 3) CE श्वासाः समधिकाः ( C °मा°) D °धिकं कार्यं A मता 4) *om* ACDE 5) C °तारिका° A °तलं 7) B वचनः E स्थाने ततः D स्थितं ABD सशिबिरः CE सदारधिः B °मावेशितः 9) *om.* ACDE 10) A उपायैर्जनितैर्वापि DE °यैर्जनितैर्नार्या 11) D °शराविद्धाया 12) D मनोभुवः 13) A किं च सौन्दर्यात्तयोः×किं च न बाध्यते BD °र्बध्न तु कैश्चिच्चिव° C मण्यते 14) A °ज्जवन° 15) D °वादेन A तत्सत्यमुद्वान्ये in margin दे B तच्छास्त्रमु° प्रायशोदितं E तत दास्त्र°

एकस्मिंस्तु मृते ऽप्यन्यो यदि जीवेत्कथं चन ।
का स्नेहगणना तत्र म्रियते चेन्न संगमः ॥ ३० ॥

पूर्वं नारी भवेद्रक्ता पुमान्पश्चात्तदिङ्गितैः ।
ततः संभोगलीलेति स्वभावसुभगा स्थितिः ॥ ३१ ॥

अन्यथापि न दोषः स्याद्यदि प्रेम समं द्वयोः ।
रक्तापरक्तवृत्तिश्चेच्छृङ्गाराभास एव सः ॥ ३२ ॥

अयं च प्रायशस्तज्ज्ञैरित्थं हास्यो निबध्यते ।
निर्धनेन मया सार्धं वेश्ये मानय यौवनम् ॥ ३३ ॥

अनुरक्तो भवेद्यस्यां नायकस्तत्सखीजनम् ।
साम्ना मानेन दानेन बाढमावर्जयत्यसौ ॥ ३४ ॥

तस्याग्रे तत्कथां कुर्वन्स्वाभिप्रायं प्रकाशयेत् ।
तदभावे नियुञ्जीत कां चित्प्रव्रजितादिकाम् ॥ ३५ ॥

तद्द्वारेण समाख्यातस्वभावो ज्ञाततन्मनाः ।
उपचारपरैर्लेखैः साधयेत्तामतन्द्रितः ॥ ३६ ॥

[1]) E एकस्मिन्तु A मृने त्वन्यो B मृतेऽन्यो A यदि [2]) CD मृयते BE गंगत: C संग. D संभ्रम [5]) A पुमान्यश्च तदीङ्गितै. [6]) E °वृत्तिश्च शृ° CE °वृत्तिस्तु शृ° B °राभाव [7]) B अनेन प्रा° AE हास्येषु B हास्येपुषु C हासे A बध्यते B वध्यते C प्रवध्यते [8]) In D this line is but before l. 11. A साक [9]) C भवेद्यत्र D °जान. [10]) A दानेन मानेन D दाने मानेन BD वाढ° [11]) B तस्यामेतत्क° E तदग्रे D प्रकाशते [12]) D न्ययुंजीत D °व्राजिका° BE °व्रजिका° A °व्रजितादिका. C °व्रजितादिकां [13]) E तद्दा° C ताद्वा° D तद्वा° C °मन्मनाः BD °तन्मना [14]) E नयाचार° A °लेखैर्मादयेत्ता° D °लेख्यै.

ततो दृष्ट्वा विविक्ते तामिन्द्रजालकलादिभिः ।
प्रयोगैर्ललितैः स्वैरं विस्मयं परमं नयेत् ॥ ३७ ॥

धात्रीसखीवेश्मनि रात्रिचारे महोत्सवे तीव्रभये वने च ।
निमन्त्रणे व्याधिमिषेण शून्ये गृहे तयोर्नूतनसंगमः स्यात् ॥ ३८ ॥

"यदा रागो गुरुः सा च लभ्यते नैव याचिता ।
क्षीणोपायस्तदा ह्यन्यां नायकः साधयेत्तत. ॥ ३९ ॥

परस्त्रीगमनोपायः कविभिर्नोपदर्शितः ।
सुन्दरं किं तु काव्याङ्गमिति मत्वा निगद्यते ॥ ४० ॥

वामता दुर्लभत्वं च स्त्रीणां या च निवारणा ।
[10]तदेवं पञ्चबाणस्य मन्ये ऽहं परमायुधम् ॥ ४१ ॥

बहुमानाद्भयाद्वापि नृणामन्यत्र योषिति ।
प्रच्छन्नकामिता रम्या सतामपि भवेद्यथा ॥ ४२ ॥

॥ तयोदाहरणम् ॥

[1]) C दृष्ट्या A °कथादि° [2]) C प्रयोगैर्विविधै. E च परं [3]) B चारिचारे महोत्सवो E व्याधिनिते च BE मूत्ये AC गेहे D गृही E गृहि [6]) ACE °दा कन्यां B °दा नारीं साधयेत्तामनद्रिन. AE साधयेदिति C साधदिति [7]) D °नो-पापाः C °भिर्न प्रद° D °र्शिता B °पदिश्यते [8]) A काव्यङ्ग' सद्वृत्तसमान्वित° E काव्यांगमेतत्तेत निदर्श्यते B मत्था [9]) From वामता to बोधितां st. 54 lost in A [10]) C तदेव D ता एव BD °बाणस्य CDE om ऽहं CDE परमपा° [12]) BDE °कामितं BDE रम्यं BE तासामपि [13]) om. DE; C तदुदा°

जीर्णं तार्णकुटीरकं निवसनं तल्पीकृतं स्थण्डिले
नीरन्ध्रं तिमिरं किरन्ति सलिलं गर्जन्त एते घनाः ।
गच्छामीति वदत्यसावपि मुहुः शङ्काकुला केवलं
चेतश्चित्रमहो तथापि रमते संकेतके कामिनाम् ॥ ४३ ॥

॥ अथ मानप्रकारः ॥

स मानो नायिका यस्मिन्नीर्ष्ययो नायकं प्रति ।
धत्ते विकारमन्यस्त्रीसङ्गदोषवशाद्यथा ॥ ४४ ॥

॥ तदुदाहरणम् ॥

किं विद्वाष्पजलावलेशललिते नेत्रे मनाक्कुञ्चिते
रागो विस्फुरणानुबन्धरुचिरः संदर्शितो गण्डयोः ।
कम्पश्चाधरपल्लवे विरचितः कामं कुरङ्गीदृशा
नो जाने किमयं प्रिये प्रकटितः कोपो ऽभिलापो ऽथ वा ॥ ४५ ॥
स प्रायशो भवेत्त्रेधा कामिनीनां प्रियं प्रति ।
अवेक्ष्य दोषमेतस्य गरीयान्मध्यमो लघुः ॥ ४६ ॥

॥ अथ गुरुमानः ॥

प्रतिनार्यां गते कान्ते स्वयं दृष्टे नखाङ्किते ।

[3]) D वदत्स्वसावपि C *om.* शङ्का [4]) CE हरते BCE कामिनो [5]) *om.* DE [6]) D has before: स मानो नायिकामिना BE समाना E नायका D यस्मि° C °र्षया [7]) C *om* सङ्ग ॥ °वशा° [8]) *om.* D; E मानाख्यविप्रलंभस्य शृंगारस्योदाहरणमाह । [9]) C °जलाविले च ल° D °लेय° E °लाविले पि D समाकुञ्चिते [12]) C कोप प्रसादो य वा D *om.* वा [13]) C मानिनोना [15]) *om.* DE; C *om.* अथ B °मानभेदः [16]) C प्रतिभार्यां

तद्धासोदर्शने गोत्रस्खलिते च गुरुर्यथा ॥ ४७ ॥

॥ तथोदाहरणम् ॥

बिम्बोष्ठः स्फुरति प्रयाति पटुतां गण्डस्थले शोणिमा
यतस्तिर्यगमू दृशौ च वलवद्भ्रूयुग्ममुद्भ्राम्यति ।
इत्थं चण्डि तथा तवैव रुचिरः कोपक्रमो जृम्भते
जातो ऽहं प्रणतीरपास्य सुतरामेतद्दिदृक्षुर्यथा ॥ ४८ ॥

॥ अथ मध्यममानः ॥

दृष्टे प्रियतमे रागादन्यया सह जल्पति ।
सख्याख्याते तथा दोषे मानो ऽयं मध्यमो यथा ॥ ४९ ॥

[10]) ॥ तथोदाहरणम् ॥

वाचो वाग्मिनि किं तवाद्य परुषाः सुभ्रु भ्रुवोर्विभ्रमो
ऽप्युद्भ्रान्तः कुत एव लोलनयने किं लोहिते लोचने ।
नास्त्यागो मयि किं मुधैव कुपितेत्युक्ते पुरः प्रेयसा
मानिन्या जलबिन्दुदन्तुरपुटा दृष्टिः सखीष्वाहिता ॥ ५० ॥

[15]) ॥ अथ लघुमानः ॥

सविलासस्फुरच्चक्षुर्वीक्षमाणे ऽपरां प्रिये ।

[1]) B °ते पि C °ते व [2]) *om.* CDE [3]) D पटता E पांडिमा [4]) C जाते तिर्यं° D याते तिर्यं° B च चपलं भ्रू [5]) C यथा E कोपस्तथा [6]) CE नितरामे° [7]) *om.* DE; BC *om.* अथ C मध्यमानः [9]) E संख्याते ष वा दोषे CB मानः स्यान्मध्यमो [10]) *om.* CDE [11]) B वाङ्मिनी C तवात्र CE परुषा B भ्रुवो वि° [12]) DE एष [13]) B मुधेव D पुनः [14]) B °रमुखा [15]) *om.* DE; BC *om.* अथ; B °मानो यथा [16]) DE सविलासं स्फु° BD °क्ष्यमाने C °वीमाने D यं परां BE परा

किं चिदन्यमनस्के च जायते स लघुर्यथा ॥ ५१ ॥

॥ तथोदाहरणम् ॥

मामेव ताडय नितम्बिनि यद्यकस्मा-
त्कोपो भवेत्तव मुखं तु निजं किमेतत् ।
आनीयते शशधरानुकृतिं कपोल-
पालीप्लुतेन घनकज्जलनेत्रवारा ॥ ५२ ॥

देशकालबलात्कोपः प्रायः सद्यो ऽपि योषिताम् ।
जायते सुखसाध्यो ऽयं कृच्छ्रसाध्यो ऽपि कामिनाम् ॥ ५३ ॥

प्रज्वलितोज्ज्वलदीपं रतिगृहमिन्दूज्ज्वलं च सौधतलम् ।
मधुमधुरीकृतमधुकरमधुरध्वनिघोषितं च वनम् ॥ ५४ ॥

इत्यादिषु प्रदेशेषु मानिनीनामसंशयम् ।
मन्युर्गुरुतमो ऽप्याशु सुखसाध्यो भवेद्यथा ॥ ५५ ॥

दृष्ट्वा चन्द्रमसं मनोभववधूकेलिक्रियाकन्दुकं

1) CD व B °तेजं 2) *om.* CDE 3) E has before श्री: 5) C[1/8] भायते E °कृतिः 6) D °पालि° C °ते घन° C adds: पतत्स्वनारता वारां धरा ( read धारा ) नृत्यंतु केकिनः । अद्य कात. कृतातो वा दु.खस्यांतं करिष्यति ॥५३॥ cfr. Ind. Spruche 3881. In C the following stanzas are accordingly numbered higher by one. B adds: इति माना. ॥ 7) CDE सर्वोऽपि 8) E °ध्यो पि यं E कामिभि. 9) E °भं दीपं B उड्गृहमि° 10) E मधुविधुरी° AB °ध्वनि घोषिता वचन With घोषिता A recommences. C °घितं वचनं D °तं विपिनं 11) A कामिनीनाम° 12) C मानो गु° A सुखतोध्यो In D stanza 55 is placed before st. 54 13) C °केलिप्रिया° D °केलिकृपा-कौतुकं

प्रोन्मीलन्नवमालतीपरिमलं चाघ्राय मानौषधम् ।
दीपार्चिःकपिशां विविक्तवलभीमालोक्य लोलदृशा
मानिन्या चटुमात्रकेण रमणे मानो मनाङ् मन्दितः ॥ ५६ ॥

मधुसमयशशधरोदयकन्दर्पमहादिकेषु कालेषु ।
[5]मानो मनस्विनीनामतिसुखसाध्यो भवेद्भूम्ना ॥ ५७ ॥

चन्द्रश्चन्द्रमुखीक्ष्यतां क्षणमियं संभाव्यतां मञ्जरी
चूतस्य स्मरविद्विषि प्रियतमे कोपे ऽपि कथं रतिः ।
इत्युक्ते सुचिरेण तत्करतलं पादाग्रसंवाहना-
द्धुन्वत्याः सुदृशो बलात्पुलकिते जङ्घे च दोर्वल्लरी ॥ ५८ ॥

[10]दूतीजनस्य पुरतो लघुरपि कोपो गुरूयते प्रायः ।
अभिनवदोषावसरे तथैव वनिताजनस्य यथा ॥ ५९ ॥

चरणपतनात्पत्युर्मन्यौ मनाक् शिथिलीकृते
त्यजति च किमप्युत्कम्परवं घनस्तनमण्डले ।
तदपि विलसत्सारङ्गाक्ष्या प्रियानुनयेच्छया

²) D °कपिशा A °शा च चित्रवलभी° C °शा विचित्रवल° B °दृशा E लोलदृशा ³) E वन्दंया B °मात्रके पि न र° but पि del, as it seems CD °केन A मनाग्मन्दितः C मनाक् खण्डितः E मनाक मंदितः ⁴) E °शशिधरोदये C °महोत्सवेषु B °महोदयेषु D °महोदिकेषु ⁵) A °सुखसौख्यो ⁶) B क्षयमिय ⁸) BD इत्युक्त्वा E इत्युक्ता प्रणतस्य त° A °तले C °वाहन E °वाहने ⁹) A च्चुम्बत्यास् C चुबंत्या B चुद्न्वत्या. E घुन्वत्या B वल्लीनु° ¹⁰) C °पि-सो गु° ¹¹) D °जन्यस्य A °जनस्यैव ¹²) B °त्युर्मनि ¹³) A भवति च C व्रजति च D किमप्युक्तं प्राप्तं घनस्तनन्मडले C घनमतुले ( sic ) ¹⁴) ADE विसरत्सार° C विकसत्सा° D °क्ष्या चिरादनवेक्ष्यया E चिरानुनयेच्छया

कथमपि पुरो दृष्ट्वा॰दूतीं पुनर्भ्रूकुटी कृता ॥ ६० ॥

चतुरचटुभिर्गाढाश्लेषैर्हठात्परिचुम्बनै-
र्मधुरवचनैर्वारं वारं गतो ऽप्यतिमन्दताम् ।
अपरवनितासङ्गाल्लग्नं विलोक्य विलेपनं
कुवलयदृशः कोपः कान्ते पुनर्नवतां गतः ॥ ६१ ॥

साम दानं च भेदः स्यादुपेक्षा प्रणतिस्तथा ।
तथा प्रसङ्गविभ्रंशो दण्डः शृङ्गारहा न तु ॥ ६२ ॥

तस्याः प्रसादने सद्भिरुपायाः षट् प्रकीर्तिताः ।
सुन्दरास्ते निदर्श्यन्ते सहोदाहृतिभिर्यथा ॥ ६३ ॥

॥ अथ साम ॥

दुर्विनीतो ऽपि पाल्यो ऽहं त्वया सुभ्रु क्षमाभृता ।
इति वाक्यं भवेद्यत्र तत्सामेति निगद्यते ॥ ६४ ॥

॥ तदुदाहरणम् ॥

सत्यं भामिनि दुर्जनो ऽस्मि दयिते पाल्यस्तथापि त्वया
यो दोषः स लघुर्मृगाक्षि नियत दीनस्य मे क्षम्यताम् ।

1) C पुरो…… कुटी कृता A °भ्रुकुटी E °भ्रुकुटिः 2) A चटुल वचनैर्गा° C कुटिलवचनैर्गा° D चटुल° D °हंसत्य° E °हंसास्य° D °चुंबितै- 3) A °रलकवलनै' C °रलवनने E °रलककलतैर्वारं 4) A °ल्लान C °दृशः कामकोपः पु॰ E काते कोप पु° 6) A सामदाने 7) A °विध्वंसो E °रहानिकृन् C शृंगा ननु E शृंगारहेतवे 8) D om. षट् D परिकी° 9) AC सदुदाहृति° B °भिस्तया 10) om. ABDE; C om. अथ 11) A अविनीतो D ऽय 12) AE वाणी 13) om. ADE; B अथ सामोदा° 14) C मानिनि 15) A तद्दोषस्सकलो मृगाक्षि E नो दोषः

इत्थं जल्पति वल्लभे मृगदृशा चक्षुर्जलं संभृतं
रक्तत्वं विरलीकृतं च वदने दत्तं च किं चिद्वचः ॥ ६५ ॥

॥ अथ दानम् ॥

अलंकारादिकं दद्यान्नायको यत्र तुष्टये ।
उद्दिश्य कारणं किं चिद्दानं तत्स्यान्च तद्यथा ॥ ६६ ॥

॥ तथोदाहरणम् ॥

प्रणयिना निजहारलतां स्वयं किल तवेति निवेश्य कु-
चस्थले ।
पुलकभाजि पुरा कुपिताप्यसौ कृतकचग्रहणं परिचुम्बिता
॥ ६७ ॥

॥ अथ भेदः ॥

यस्मिन्परिजने तस्याः समावर्ज्य प्रसादितम् ।
तेनैव लभते कान्तां कान्तो भेदः स उच्यते ॥ ६८ ॥

॥ तदुदाहरणम् ॥

धुन्वाना करपल्लवं विदधती दृष्टिं रुषा रागिणीं
तन्वाना वचनानि निष्ठुरतरं मागाः शठेत्थं मुहुः ।

1) A जलात् B °दृग्दलैः C °जलैः E चक्षुर्जलत्संवृतो C संहृतं 2) B वक्रत्वं D विमली° B °कृतं न वचने *om.* च before किं 3) *om. cdd.* 4) D दत्वा ना° 5) B उद्देश्य E चिद्दत्तं लब्धानुज यथा 6) *om.* ACDE 7) BCD °लता BE नवेति C तावेति B कुचद्वये 8) From भाजि, 10 इत्थं 3, 6 lost in A 9) *om.* CDE; B ॥ भेदलक्षण ॥ 10) C °जनं E जनं C प्रसादनैः 11) C ददते BE कान्तं 12) *om.* CDE 13) B रागिणा C रागिनो D रागिनी 14) B तन्वना B निष्ट° CDE निष्ठुर° B माया सखीत्थं

दूरादागतभीतिमत्यभिमते स्वैरं स्वसंज्ञाकृता
पूर्वाविर्जितया चकोरनयना सख्यैव संबोधिता ॥ ६९ ॥

॥ अथोपेक्षा ॥

प्रसादनविधिं त्यक्त्वा वाक्यैरन्यार्थसूचकैः ।
यस्मिन्प्रसाद्यते योषिदुपेक्षा सा मता यथा ॥ ७० ॥

॥ तथोदाहरणम् ॥

एतत्किं ननु कर्णभूषणमयं हारः सुकाञ्ची नवा
बद्धा का चिदियं त्वयाद्य तिलकः श्लाघ्यः प्रिये कल्पित ।
प्रत्यङ्गं स्पृशतेति तत्क्षणभवद्रोमाञ्चमालाञ्चिता
तन्वी मानमुपेक्ष्यैव शनकैर्धूर्तेन संमोचिता ॥ ७१ ॥

॥ अथ प्रणतिः ॥

केवलं दैन्यमालम्ब्य पादपातो नतिर्मता ।
अभीष्टा सा भृशं स्त्रीणां ललिता च भवेद्यथा ॥ ७२ ॥

॥ तथोदाहरणम् ॥

कुङ्कुमार्द्रकुचकुम्भबिम्बितं वीक्ष्य पृष्ठमितराङ्गनाश्रयम् ।

[1]) D °दायत? E °दायति? C °मते दृष्टे [3]) om. CDE [4]) B प्रमादविधि D प्रसाधन? CE °विधि D त्यक्ता वाक्यैरत्यर्थं? [5]) E यत्र प्रमा° [6]) om. CDE [7]) E एतत्कि वत्र कर्णं? D हारस्तु कांचीलता [8]) D चिद्दयं [9]) D °मावमालविता [10]) B °पेक्ष्यपैव C समोहिता [11]) om. E; CD om. अथ [12]) D om. केवल B पादापातेन निर्मिता C °पातौ [13]) C°ष्टभिष्टा E अभीष्ट सो मता D ललिनं C सा भ° E ललिता जायते यथा [14]) om. CDE [15]) C °कु मिलबितं D °कुंभलिमिनं CDE पृष्टमपरा° B °रागणाश्रय C °रांगना°

शंसदूनरसमाशु सा मुदं प्राप पादपतितस्य कामिनः ॥ ७३ ॥

॥ अथ प्रसङ्गविभ्रंशः ॥

अकस्माज्जायते यत्र भयहर्षादिभावना ।
सो ऽयं प्रसङ्गविभ्रंशः कोपभ्रंशात्मको यथा ॥ ७४ ॥

॥ तथोदाहरणम् ॥

कथं ममोरसि कृतपक्षनिःस्वनः
शिलीमुखो ऽपतदिति जल्पति प्रिये ।
निवृत्य किं किमिति ब्रुवाणयानया
ससाध्वसं कुपितममोचि कान्तया ॥ ७५ ॥

यथोत्तरं बलीयांस इत्युपायाः प्रसादने ।
आद्यास्त्रयो घनं कार्या विदग्धैः पश्चिमा क चित् ॥ ७६ ॥

नातिखेदयितव्योऽयं प्रियः प्रमदया क चित् ।
मानश्च विरलः कार्यः प्रणामोत्सवलब्धये ॥ ७७ ॥

इत्युपायान्प्रयुञ्जीत नायिकापि प्रियं प्रति ।
क्रुद्धं नोपेक्षते किं चित्तत्रान्यत्कारणं भवेत् ॥ ७८ ॥

1) B सदादून° C शंसदून° D संसरद्घनरसाप्लुता मुदं E संगभूतरस° B om. प्राप 2) om. DE; B om. अ 3) D °स्माद्यायते C om. भय D °भावनो 4) C °भ्रंशात्मतो 5) om. CDE; B ॥ अथ प्रसंगविभ्रंशोदाहरणं ॥ 6) C °निस्वन E °निस्वन 7) E ऽखलगदिति 8) E विवृत्य C किमेवदि DE किमिदमिति C ब्रुवाणायां D ब्रुवाणया E ब्रुवाणना 9) C साध्वसं 10) D बलीयान्स इत्युपायः 11) CD °त्रयः सदा BE पश्चिमा D पश्चिम 13) D om. मान D प्रणयोत्स° CD °सिद्धये 14) E नायका° 15) B क्रुद्धा E कुर्लंजातेप्यति C किं तु तत्रन्य¹⁰ D किं तु तत्रान्य°

स्वेहं विना भयं न स्यान्मन्मथो नेर्ष्यया विना ।
तस्मान्मानप्रकारोऽयं द्वयोः प्रीतिप्रवर्धनः ॥ ७९ ॥

प्रियसुभगनाथवल्लभरुचिरस्वामीशकान्तचन्द्रमुखाः ।
दयितमनोरमरमणीजीविता इत्यादि नाम स्यात् ॥ ८० ॥
प्रीतौ भर्तरि सुदृशामप्रीतौ पुनरमूनि शठधृष्टौ ।
निर्लज्जदुराचारौ निष्ठुरदुःशीलनामानि ॥ ८१ ॥
गर्वाद्व्यसनात्त्यागादिप्रियकरणाच्च निष्ठुराद्वचनात् ।
लोभादतिप्रवासात्स्त्रीणां द्वेष्यः प्रियो भवति ॥ ८२ ॥

॥ अथ प्रवासः ॥

परदेशं व्रजेद्यत्र कुतश्चित्कारणात्प्रियः ।
स प्रवास इति ख्यातः कष्टावस्थो द्वयोरपि ॥ ८३ ॥

॥ तथोदाहरणम् ॥

दृष्टं केतकधूलिधूसरमिदं व्योम क्रमाद्वीक्षिता
कक्षान्ताश्च शिलीन्ध्रकन्दलभृतः सोढा कदम्बानिलाः ।
सख्यः संशृणुताश्रु मुञ्चत भयं कस्मान्मुधैवाकुला

1) B स्यान्ममो 2) B प्रति° C प्रीतिविव° E प्रीतिविव° 3) CE °सुभगरुचिरवल्लभनाथस्वामी° D °सुभगरुचिरुचिरवल्लभस्वामिन्नीश° 4) D °मनोहर° CE °रणाजो° edd. °जीवित 5) E पुतरिमानि नामानि B °धृष्टे। E °हृष्टौ 6) E दुर्वृत्तो निष्टुरदुःशीलवामादि (sic, all) CD निष्ठुर° 7) B °व्यसनत्या° CD निष्टु° C °राच्च वच° E °रालापात 9) om CDE 10) C व्रजेद्यस्मिन् D गतो यत्र 12) om. DE; C एतदुदा° 13) D कष्टं के° B केतन° DE केतकि° C क्रमाद्विक्षितं D °क्षितं E °द्वीक्षता 14) B कक्षान्तश्च CE कक्षान्तारश्च 15) C तस्यैः D संशृणुतारच C °तासु B मचय भयं C मुंच

एतानप्यधुनातिवज्रघटिता नूनं सहिष्ये घनान् ॥ ८४ ॥

॥ अथ देशान्तरकामुकस्यावस्थावर्णनरूपम् ॥

कामं कर्णकटुः कृतो ऽतिमधुरः केकारवः केकिनां
मेघाश्चामृतधारिणो ऽपि विहिताः प्रायो विषस्यन्दिनः ।
उन्मीलन्नवकन्दलावलिरसौ शय्यापि सर्पायते
तत्किं यद्विपरीतमत्र न कृतं तस्या वियोगेन मे ॥ ८५ ॥

कार्श्यजागरमालिन्यचिन्ता वै तत्र जायते ।
अवस्था विविधा स्त्रीणां मृत्युः स्याद्वधेः परम् ॥ ८६ ॥

॥ अथ देशान्तरगतनायकस्य नायिकामुद्दिश्य कामं प्रति सखीसोपालम्भवाक्यम्॥

[10]अद्यैव यत्प्रतिपदुद्गतचन्द्रलेखा-
सख्यं त्वया तनुरियं गमिता वराक्याः ।
कान्ते गते कुसुमसायक तत्प्रभाते
बाणावलीं कथय कुत्र विमोक्ष्यसि त्वम् ॥ ८७ ॥

॥ अथ देशान्तरगतनायकनायिकास्वरूपनिरूपणम् ॥

1 D °धुनापि वज्र° C °ष्ये धुना 2) *om.* CDE 3) B करोति मधुरः DE कृतो पि म° B केकिनो 4) C °मृतदायिनो D °मृतदायिनो E °मृतवर्षिणो B प्रायेण D विप स्य° 5) D °वनिर° CD °सो सह्याप्यसह्यायते E सर्प्पों द्य द्य शिय्यायते 6) *om.* यद् E चिद्विप° D °तमद्य C कृते C °गेन किं 7) C कार्ज्यं° B °मालिन्यं DE °चिताद्या D यत्र 8) C मृत्युः देवधेः DE मृत्युश्चेदवधेः ( E °धिः ) E पुरः 9) *om.* CDE 10) C °रेखा 11) D वराक्या 12) B °साधक E नु प्रभाते 13) B *om.* बाणा° E °लि BD विमोक्षसि 14) *om.* DE; BC *om.* अथ B *om.* गत B °नायकोना° C °नायकास्व° ( *om.* नायिका ) C °स्वरूपणं

निःश्वासैः सह सांप्रतं सखि गता वृद्धिं ध्रुवं रात्रयः
साधँ लोचनवारिणा विगलितं तत्प्रकणत्कङ्कणम् ।
प्राणाशा तनुतामुपैति च मुहुर्नूनं तनुस्पर्धया
कन्दर्पः परमेक एव विजयी यातेऽपि कान्ते स्थितः ॥ ८८ ॥

नीरागो ऽधरपल्लवो ऽतिमलिना वेणी दृशौ नाञ्जिते
व्यालम्व्यालकमालिका धवलतामालम्बते ऽङ्गच्छविः ।
इत्थं सुभ्रु विसंष्ठुलापि विरहव्यापद्विमर्दादियं
सख्यैव स्थिरशोभया दृढतरं प्रत्यङ्गमालिंग्यते ॥ ८९ ॥

किं तत्र नास्ति रजनी किं वा चन्द्रो न तत्र सौधरुचिः ।
येन सखि वल्लभामपि न स्मरति स मां विदेशरुचिः ॥ ९० ॥

प्रसर शिशिरामोदक्षोदं समीर समीरय
प्रकटय शशिन्नाशा. कामं मनोभव जृम्भ्यताम् ।
अवधिदिवसः पूर्णः सख्यो विमुञ्चत तत्कथां
हृदयमधुना किं चित्कर्तुं ममान्यदिहेच्छति ॥ ९१ ॥

इत्यादिविरहावस्थाः पुंसो ऽपि हि भवन्ति ताः ।

¹) BCE निश्वा° D *om.* ध्रुवं E परा रा° ²) D °वारिणेव गलितं B यत्प्राकृतं ककणं C तत्प्राकृतैः ककणैः D तत्प्रावत्राणत्कंकणे E तत्प्राकृतं मे मुत्व ³) C मुहुस्प° D न तु स° ⁴) B जाते D यातो E स्थाने रकास्तस्थितः C स्थिति ⁵) B °ल्लवे ⁶) D व्यालंब्यालक° B °छवि D °छवि ⁷) E सुभ्रु वि° B विसंस्थलापि CD °ष्ठु° D विसस्थलापि E °व्यापारम° ⁸) cdd. सख्येव C °श्योभया E न किं र सो व्यरचिः ¹⁰) B *om.* न ¹¹) B °क्षौदं CDE °मोदं C बौदं D क्षोदं E कोदं E समर B समीरणः ¹³) CD जृ भता ¹⁴) B °दिहेछते

कन्दर्पशरघाताद्या मा भूवन्वैरिणामपि ॥ ९२ ॥

॥ अथ करुणात्मकः ॥

यत्रैकस्मिन्मृते ऽप्यन्यो मृतकल्पो ऽथ तद्गतः ।
नायकः प्रलपेत्प्रेम्णा करुणो ऽसौ स्मृतो यथा ॥ ९३ ॥

॥ तदुदाहरणम् ॥

दग्धा स्निग्धवधूविलासकदली वीणा समुन्मूलिता
पीता पञ्चमकाकली कवलिता शीतद्युतेः कौमुदी ।
प्लुष्टः स्पष्टमनेकरत्ननिचयो नाहं रतिः केवलं
कन्दर्पं दहता हरेण भुवनं निःसारमेतत्कृतम् ॥ ९४ ॥

॥ अथ पुरुषप्रलापोदाहरणम् ॥

वक्त्रं चन्द्रमसा दृशौ मृगगणैः केशाः कलापिव्रजै-
र्मातङ्गैः स्तनमण्डलं भुजलतोल्लासश्चलत्पल्लवैः ।
सौगन्ध्यं मलयानिलेन बलिना तन्वी विभज्येति सा
सर्वैर्निष्करुणैर्हृताहृतमहो दैवेन किं चिन्न मे ॥ ९५ ॥

इयतीं सुभगावस्थां गतो ऽसि यस्याः कृते स्मरतङ्गात् ।

[1]) E °रिणोरपि [2]) om DE; BC om. अथ [3]) C °स्मिन्विनष्टेऽप्यो B °स्मिन्विनष्टे न्यो E यत्रोकस्मिन विपन्ने ज्यो मृ° ।प B तद्गवा E तद्गेतं [4]) B नायिका BDE °त्प्रेम्ना B मृवो E मतो [5]) om. CDE [6]) C °वधू° CE समुन्मीलिता [8]) B प्लुष्ट E प्लुष्टा B रत्नरिपुणा [9]) CE हरता [10]) om. DE; C om. अथ [12]) D °लतापासश्च° CE °ल्लासो लतासंहरैः [13]) D °तेन दयिता पत्नी वि° C °निले [14]) BCD °निःक° E °निंब° B °र्हृता ध्रुवमहो D om. हृता E °णो हृता ध्रुवमहो तै केन दैवेन मे [15]) C इयंरी C om. ऽसि B यस्या C वस्याः D स्मरतां

मूर्छां हरामि सा तव गतपुण्या नयनसलिलेन ॥ ९६ ॥

पाशो विपाशित उपाहित एष सान्द्रः
कर्पूररेणुरुपगूढमुरो नताङ्गि ।
पापेन येन गमितासि दशाममुष्यां
मूर्छाविगमललितं मयि धेहि चक्षुः ॥ ९७ ॥

म्लानो मुक्ताश्रुरुद्विग्नः स्रस्ताङ्गो नष्टचेतनः ।
सचिन्तो दैन्यभागस्मिन्नेवंप्रायो जनो भवेत् ॥ ९८ ॥

केषां चित्करुणाभ्रान्तिः कारुण्यादिह जायते ।
एतस्य मिथुनावस्थां विस्मृत्य रतिमूलजाम् ॥ ९९ ॥

स्त्रीपुंसोश्च भवेदेष सापेक्षः संगमः पुनः ।
शृङ्गारवचनप्रायः करुणः स्यात्स चान्यथा ॥ १०० ॥

तस्माच्छृङ्गार एवायं करुणेनानुमोदितः ।
सौन्दर्यं सुतरां धत्ते निबद्धो विरलं बुधैः ॥ १०१ ॥

॥ अथ स्त्रीणा सञ्जीवन· ॥

[1]) B हरति B तगपु° C गतगत°  [2]) B पासो विपासित CD उपासित BD सान्द्र  [3]) E °गूढतरो C नतागि D नतागो  [4]) B केन D *om.* येन CE गमितेति D दशा° C °ममुष्मिन् E °ममुष्मिन  [6]) E ग्लानो C मुक्तामुरु° D °द्विग्नः  [7]) C °भाग्य° D °भायो स्मि°  [8]) B °दिपु E °दिद  [9]) D एतच्च C विसृत्य B मति° CD रतिमात्रजा  [10]) CE स्त्रीपुंसयोर्म° D °देव CD सापेक्षे CE संगमे D संगमो  [11]) E °वचने प्राय: D करुणा C स्यान्न चा° D स्यात्मता यथा  [12]) BE तस्मात् शृ° D तस्मा शृ° B नामायं C करुणो नानु°  [14]) *om.* DE; BC *om.* अथ

कारुदासी नटी धात्री प्रतिवेश्याथ शिल्पिनी ।
बाला प्रव्रजिता चेति स्त्रीणां ज्ञेयः सखीजनः ॥ १०२ ॥

कलाकौशलमुत्साहो भक्तिश्चित्तज्ञता स्मृतिः ।
माधुर्यं नर्मविज्ञानं वाग्मिता चेति तद्गुणाः ॥ १०३

[5]विनोदो मण्डनं शिक्षोपालम्भोऽथ प्रसादनम् ।
संगमो विरहाश्वासः सखीकर्मेति तद्यथा ॥ १०४ ॥

॥ तदुदाहरणम् ॥

मया कोऽयं मुग्धे कथय लिखितः सत्वरसखी-
वचः श्रुत्वेत्युच्चैर्विनिहितदृशा चित्रफलके ।
[10]न वक्तुं तन्वंग्या शकितमथ वोद्दामविदल-
त्कदम्बाकारेण प्रिय इति समाख्यायि वपुषा ॥ १०५ ॥

प्रत्यङ्गं प्रतिकर्म नर्मपरया कृत्वाधिरूढस्मरा-
दौत्सुक्यं प्रविलोक्य मोहनविधौ चातुर्यमस्याः पुनः ।
सख्या यावकमण्डनं न रचितं पादे कुरङ्गीदृशः
[15]सस्मेरं विशदच्छदे च शयने दृष्टिः समारोपिता ॥ १०६ ॥

नीरन्ध्रं परिरम्यते प्रियतमो भूयस्तरां चुम्ब्यते ।

1) BE कारदासो B नदी C °वेश्माथ E °वेश्मा च 2) C स्त्रीणां प्रेष्य-जना स्मृताः D ज्ञेया सखीजना· 4) B माधुर्यंनर्म° B वाङ्मिता 5) D विनोदं B मदनं D प्रसाधनं 6) C स्वीकर्मेति 7) om. CE 8) D मये BCD कोपं मुग्धे 10) B शकितमथ किं तु विदलत्क° D शकितमय वा चारविदला- B °वि-लस- 12) B कृत्वाभिरूढस्म° DE कृत्वा निगूढस्मरा- 13) B °दौत्सुका E चार्य-मालोक्य च 14) B यावमंडनं C न चित

तद्वाढं क्रियते यदस्य रुचिरं चाटूचकैस्तन्यते ।
सख्या मुग्धवधूरियं रतिविधौ यत्नेन संशिक्षिता
विज्ञातं गुरुणा पुनः शतगुणां पुष्पेषुणा कारिता ॥ १०७ ॥
सुभग भवता हृद्ये तस्या ज्वलत्स्मरपावके
ऽप्यभिनिवसता प्रेमाधिक्यं चिरात्प्रकटीकृतम् ।
तव तु हृदये शीतेऽप्येवं सदैव सुखासये
मम सहचरी सा निःस्नेहा मनागपि न स्थिता ॥ १०८ ॥
कोपं विमुञ्च कुरु नाथ वचो मदीय-
माश्वासय स्मरकृशानुकृशां कृशाङ्गीम् ।
एकाकिनी कठिनतारकनाथकान्त्या
पञ्चत्वमाशु ननु यास्यति सा वराकी ॥ १०९ ॥
अमुं दधे ऽ शुकमहमत्र पादपे
युवामलं निभृतमिहैव तिष्ठतम् ।
रहःस्थयोरिदमभिधाय कामिनोः
पुरो ययौ निपुणसखी लतान्तरम् ॥ ११० ॥

[1]) BCD तद्वाढ E तद्गाढ D चाटुत्वमातन्यते E चारुश्रीः. चाटू सूत्यते मुग्ध- वैस्तन्यते [2]) E रतविधौ [3]) E निश्रांतगुणा C विज्ञातः D विज्ञानः C करणां D करणा [4]) B तस्या D तस्य [5]) D °निविशिता E °निविशेता D रागाधिक्य [6]) E नु C शीते [7]) D निस्नेहा [8]) BE मदीयं [9]) B मा वासय C °स्वा° E °क्षता कृ° E कृशाग्ों [10] CE °तारकराज° D °तारकायकांत्यां [11]) B यास्यसि E व्यास्यति [12]) C माह B दध्रे CDE दधे शुक° E शुकमिह पत्रपादपे C °हमत्र प्रादपे D adds : युवामत्र पादपे [13]) E युवामहं BC तिष्ठता D तिष्टता E तिष्टंत [14]) BDE रहस्य° C रहस्तयो° B *om.* from मभिधाय to p. 68, l. 1 गुच्छे° E लतातगे

स्फुरति यदिदमुच्चैर्लोचनं तन्वि वामं
स्तनतटमपिधत्ते चारुरोमाञ्चमाला ।
कलयति च यदन्तःकम्पतामूरुकाण्डं
ननु वदति तदद्य प्रेयसा संगमं ते ॥ १११ ॥

⁶इत्यादि विविधं सख्यो व्यापारं कुर्वते सदा ।
योषितामत्र सर्वस्वनिधानकलशोपमाः ॥ ११२ ॥

इत्थं विरचनीयोऽयं शृङ्गारः कविभिः सदा ।
अनेन रहितं काव्यं प्रायो नीरसमुच्यते ॥ ११३ ॥

तव नाथानुरागोऽयं मद्विधैः कथमुच्यते ।
¹⁰येनैकापि प्रिया नीता पश्चत्वं पुण्यकारिणा ॥ ११४ ॥

इत्थं विचार्य प्रचुरप्रयोगान्योऽमुं निबध्नाति रसं रसज्ञः ।
तत्काव्यमारोप्य पदं विदग्धवक्त्रेषु विश्वं परिबम्भ्रमीति
॥ ११५ ॥

॥ इति श्रीरुद्रभट्टविरचिते शृङ्गारतिलकाभिधाने काव्या-
लंकारे विप्रलम्भशृङ्गारो नाम द्वितीयः परिच्छेदः ॥

1) E स्फरति B °मुखकैर्लोचनं 2) C स्तनयुगम° E °मभिधत्त cdd. °माला 3) B च यदंगतः कंप° C च यदंतःकल्प° D च यदतःकं° E चलदतः कं° 4) C यदद्य B संगमे द्य 5) E इत्थं च वि° C विवि स° B °ते सदा D adds ११ In C the order is 1. 5. 6. 9. 10. 7. 8. 11. 12. 7) E °नीयो सौ 8) E om. stanza 114 10) C येनैकेन प्रिया नित्यं 11) B प्रचुरं 12) E °प्य पदग° 13) B om. भट्ट; C °भट° E श्रीभट्टरुद्र° C puts का° before शृ° BCE °तिलके (om. प्रभिधाने) D काव्यरसाल° 14) CE om. विप्र° नाम B °शृंगारे द्वि° C adds ॥२॥

विकृताङ्गवचश्चेष्टावेषेभ्यो जायते रसः ।
हास्यो ऽयं हासमूलत्वात्पात्रत्रयगतो यथा ॥ १ ॥

॥ अथोत्तमलक्षणम् ॥

किं चिद्विकसितैर्गण्डैः किं चिद्विस्फारितेक्षणैः ।
किं चिल्लक्ष्यद्विजैः सो ऽयमुत्तमानां भवेद्यथा ॥ २ ॥

॥ तयोदाहरणम् ॥

पाणौ कङ्कणमुत्फणः फणिपतिर्नेत्रं ज्वलत्पावकं
कण्ठः कुण्ठितकालकूटकुटिलो वस्त्रं गजेन्द्राजिनम् ।
गौरीलोचनलोभनाय सुभगो वेषो वरस्येति मे
गण्डोल्लासविभावितः पशुपतेर्हासोद्गमः पातु वः ॥ ३ ॥

॥ अथ मध्यमनीचहासलक्षणम् ॥

मध्यमानां भवत्येष विवृताननपङ्कजः ।
नीचानां निपतद्बाष्पः श्रूयमाणध्वनिर्यथा ॥ ४ ॥

[1]) CDE °वचःकृत्य° [2]) D हासो E हास्योपहासमूलात्मा पा° BCD हास्य° C °त्रयागतो. B adds: हासस्त्रिविध । उत्तमो मध्यमो नीच. ॥ [3]) om. CDE [4]) B °द्विकृते° C °द्विदिकासिते° D °द्विकासिते° BE °क्षण. [5]) B विल्लसद्विजैः C चिद्दिजैः E °द्विज. C स्मृतो यथा [6]) om. CDE [7]) B °नेत्रे D °नेत्रं लक्षता° B °वक्रः [8]) E कुट्टित° [10]) BD °तेर्हास्यो° [11]) om. DE; BC om. अथ B मध्यनीच° C °नीचच° B °हास्य° [12]) BD विवृता° B °पंकजं [13]) B विपतद्वा° C °द्वाष्पश्रू° E निपतेद्द वा° B श्रूयमाणो ध्व° D °मान°

॥ अथ मध्यहासोदाहरणम् ॥

मुग्धे त्वं सुभगे न वेत्सि मदनव्यापारमद्यापि तं
नूनं तेऽब्जदलैर्पिणायमलिना दष्टो न मत्रींधरः ।
मत्र्यैवं हसितं वधूं प्रति सदा मानन्दमात्रिमित्र-
द्वक्त्रान्तर्गतसीधुवासरसिकैर्भृङ्गैर्यथा धावितम् ॥ ५ ॥

॥ अथ नीचहासोदाहरणम् ॥

त्यक्त्वा गुञ्जफलानि मौक्तिकमयी भूषा स्तनेष्वाहिता
स्त्रीणां कष्टमिदं कृतं सरसिजं कर्णे न बर्हिच्छदः ।
इत्थं नाथ तवारिधाम्नि शबरैरालोक्य चित्रस्थितिं
[10]बाष्पार्द्रीकृतलोचनैः स्फुटरवं दारैः समं हस्यते ॥ ६ ॥

॥ अथ हास्यरसानुभावः ॥

अस्मिन्सखिकराघातनेत्रोल्लासाङ्गवर्तनम् ।
नासाकपोलविस्पन्दो मुखरागश्च जायते ॥ ७ ॥

॥ अथ करुणः ॥

[1]) *om.* DE; BC *om.* अथ B तयोरा° [2]) E मुग्धा C *om.* न B तन् CE यन् [3]) C ते कमलं पिणा° D ने जलजेटिना° E नूत । तजलजैपिणायमालना D दृष्टो C *om.* न [4]) B सख्येवं E सख्यत्यं CDE प्रति तथा सा° [5]) C °वक्त्रान्तर्गत° E °द्वक्त्रान्तर्गतसीधुगंध° [6]) *om.* DE; BC *om.* अथ B नीचलक्षणं [7]) C त्यक्ता DE त्यक्ता B *om.* भूषा C शोभा [8]) with णा in स्त्रीणा A recommences. A बर्हं° BD बर्हि° CDE °च्छदं [9]) A नाम ABDE शबरै° C शरवरैरा° DE °ति [10]) A वा° B वाष्पा° C वाष्पांधो° D वाष्पांधो° B स्फुटतरं B हास्यते [11]) *om.* ABDE [12]) BCD तस्मिन्स° D °सखो° [13]) B °निष्पंदो D विस्यंदो E विस्मंदो [14]) *om.* ADE; B अथ करुणरसविरोपशोकस्थायिभावः

शोकात्मा करुणो ज्ञेयः प्रियभृत्यधनक्षयात् ।
तत्रस्थो नायको दैवहतः स्याद्दुःखभाजनम् ॥ ८ ॥
भर्ता संगर एव मृत्युवसतिं प्राप्तः समं बन्धुभिः
प्रौढानामनिशं दुनोति च मनो वैधव्यलाभाद्वधूः ।
बालो दुस्त्यज एक एव च शिशुः कष्टं कृतं वेधसा
जीवामीति महीपते प्रलपति त्वद्वैरिसीमन्तिनी ॥ ९ ॥

॥ अथ करुणानुभावः ॥

भूपातो दैवनिन्दा च रोदनं दीननिःस्वनः ।
शरीरताडनं मोहो वैवर्ण्यं चात्र जायते ॥ १० ॥

॥ अथ रौद्रः ॥

क्रोधात्मको भवेद्रौद्रः प्रतिशत्रूनमर्षणः ।
रक्षःप्रायो भवेद्यत्र नायको ऽत्युग्रविग्रहः ॥ ११ ॥
यैः प्राणापहृतिः कृता मम पितुः क्षुद्रैर्युधि क्षत्रियै

1) C °मृत्यधिन° E °भृत्यांद्दंन° 2) AC तत्रेत्र B मनेत्य E तत्रस्थ C देव° BC °हत 3) A भर्त्ता A °वसतिः प्राप्ता D मृत्युपंवो प्राप्ताः A बन्धुभिर् E बाधवैर् 4) A पूना ह्यासमिय E दानाकामीमय A धुनोति E °व्यमावाद्द° 5) B एक एप च A वेदसा 6) C वितति A तद्वैरि° 7) *om.* ADE; B करुणा तथानुभावः D अथ करुणो रसानुभावकथनं 8) A भूपतो C °पतो देवनंदा A न चैव निस्स्वनः B °निस्वनं C °निस्त्रनः D °निस्वसं E °निस्त्रन. 9) A चैत्र 10) *om* ADE; B ॥ रौद्रभावं ॥ 11) C °श्रूरान° D °शत्रन° B °मर्पितः In A मर्पणः रक्ष is broken off 12) D भवत्यत्र E भवेत्तत्र नायको प्युग्र° 13) Aपरहा° B प्राणप्रहृतिः D मयि गुरोः क्षु° From त्रि. to तुः broken off in A. C क्षुद्रैः कृते क्ष° E °युधा क्षये B °यैः

रामो ऽहं रमणीर्विहाय बलवन्निःशेषमेषां हठात् ।
भास्वत्प्रौढकुठारकोटिघटनाकाण्डत्रुटत्कंधरा-
स्रोतोऽन्तःस्तविस्रशोणितभरैः कुर्यां क्रुधो निर्वृतिम् ॥ १२ ॥

॥ अथ रौद्रानुभावः ॥

[5]मुखरागायुधक्षेपस्वेदकम्पाधरग्रहाः ।
शक्तिशंसा कराघातो भ्रुकुटिश्चात्र जायते ॥ १३ ॥

॥ अथ वीररसः ॥

उत्साहात्मा भवेद्वीरो दयादानादिपूर्वकः ।
त्रिविधो नायकस्तत्र जायते सत्त्वसंयुतः ॥ १४ ॥
[10]गाम्भीर्यौदार्यसौन्दर्यशौर्यधैर्यादिभूषितः ।
आवर्जितजनो जन्ये निर्व्यूढप्रौढविक्रमः ॥ १५ ॥

॥ अथोत्तमवीरः ॥

अयि विहंग वराककपोतकं विसृज धेहि धृतिं मम मेदसा ।
शिबिरहं भवता विदितो न किं सकलसत्त्वसमुद्धरणक्षमः
॥ १६ ॥

[1]) B रमणी D रमतेणीर्वि॰ B बलवच्चि.शंकमेषां D बलवन्निशेषमेव A ॰निश्शेषमेका E बलवाननिः॰ [2]) D वेगा प्रौ॰ A ॰गटना॰ [3]) A स्रोतान्त॰ BDE श्रो॰ BD ॰श्रुत॰ E ॰श्रुति॰ BD ॰विश्र॰ C ॰विस्र॰ C कुधां [4]) om. ADE; B om. अथ [5]) B ॰रायोयुधाक्षेप. A ॰धाक्षे॰ E ॰घो॰ C ॰पं॰ D ॰कंपो॰ AD ॰ग्रहः [6]) B शक्तिः शघाक॰ A भ्रुकुटी चात्र [7]) om. ABDE [8]) A दयदानानि॰ CE ॰नाजिपु॰ [9]) C विविधो [10]) C ॰यशूरत्वषमधैर्या॰ E ॰यंशोडीयधर्मधै॰ A ॰पिता: [11]) ACD ॰जनो बाढ (D बा॰) B जन्यनित्याढविक्रमः C निव्यू॰ D ॰ढः प्रोटः वि॰ [12]) om. ADE; BC om. अथ [13]) ABD शिवि॰

॥ अथ मध्यमवीरः ॥

मुषितो ऽसि हरे नूनं भुवनत्रयमात्रलब्धितोषेण ।
बलिरर्थितदो ऽस्मि यतो न याचितः किं चिदप्यधिकम् ॥ १७ ॥

॥ अथाधमवीरः ॥

मत्तैरावणतीव्रदन्तमुसलै रैरण्डकाण्डायितं
वज्रेणापि विकीर्णवह्नितितिना मार्णालनालायितम् ।
मद्वक्षस्यवलम्ब्य किं चिदधुना तद्विस्मृतं वज्रिणा
युद्धं यद्यवलम्ब्यते स तु पुनः सज्जो ऽस्म्यहं रावणः ॥ १८ ॥

॥ अथ वीररसानुभाव. ॥

धृतिगर्वोद्धृत्यमतिस्मृतिरोमाञ्चा भवन्ति चामुष्मिन् ।
विविधा वाक्याक्षेपाः सोत्साहामर्षवेगाश्च ॥ १९ ॥

॥ अथ भयानकरसः ॥

[1]) *om.* ADE; BC *om.* अथ [2]) In D stanza 18 is placed pefore stanza 17. AD मुखितो B हरेनूंन C हरे धूर्त्तं A *om.* मात्र D °लब्ध° E °लब्ध° AB °तुष्टेन [3]) B बलिरर्थिदो corr. in margin to °र्थिदोदो (*sic*) C बलिरर्थंदो D बलिरस्मि A नियतो C नियते D *om.* यतो न E तो स या° B याचित E याचितो ह नाद्ये कि B °दप्यधिकं C कि चिदपि ॥ १७ ॥ E °दप्या-धिका [4]) *om.* ADE; B °वीरो यथा C ॥ अथ वीरः ॥ [5]) B यत्रैरावणदंतिदंत° E यत्रैरावतदंततीव्र° C °रावत° A °मुसुलैरैरंड° BCD °मुसलैरै° E °रै° [6]) D वह्निरुचिता A मार्जारनाला° [7]) E °ना ते हि स्मृतं C तद्विस्मितं In A वज्रिणा is torn off [8]) B °लंबते त्र स पुनः D स च [9]) *om* cdd. [10]) B धृति-गर्वोद्वित्यं स्मृ° In A धृतिगर्वोद्व is torn off C °गर्वोद्धतिमति° D धृतिगर्वंद्धत्यंमतिरोम-ञ्चाः E °गर्वोत्त्रियनतिस्मृ° C भवति [11]) BE वाक्यक्षेपाः C वाक्याक्षेपाः From सोत्सा° to पङ्कजस्य stanza 54 lost in A. B adds: ॥ इति वीररसानुभावः [12]) *om.* DE

भयानको भयस्थायिभावो ऽसौ जायते रसः ।
शब्दादिविकृताद्गाढं बालस्त्रीनीचनायकः ॥ २० ॥

॥ अथ बालभयानकोदाहरणम् ॥

श्रुत्वा तूर्यनिनादं द्वारे भयचलितललितबाहुलतः ।
[5]धन्यस्य लगति कण्ठे मुग्धशिशुर्धूलिधूसरितः ॥ २१ ॥

॥ अथ स्त्रीगतभयानकोदाहरणम् ॥

प्रणयकलहसङ्क्रान्तमन्युभाजा निरस्तः
प्रकटितचटुकोटिः पादयोरानतो ऽपि ।
नवजलधरगर्जैर्भीतयासौ कया चित्
[10]त्रुटिततरलहारं सस्वजे प्राणनाथः ॥ २२ ॥

॥ अथ नीचगतभयानकोदाहरणम् ॥

कम्पोपरुद्धसर्वाङ्गैर्गलत्स्वेदोदबिन्दुभिः ।
त्वदारब्धैर्महीनाथ वैरिभिर्वनितायितम् ॥ २३ ॥

॥ अथ भयानकानुभावः ॥

[1]) B °स्थायी भा° [2]) B शब्दादेविकृ° E °विकृतप्रोद्दित्रोल° BC °द्गाढं D °दृघाढ BDE बाल° D °स्त्रीणां च ना° [3]) *om.* DE; E बाल॰ C बालनायको॰ [4]) B श्रुत्वा च तूर्यनिर्घोषं D तुर्यं° CE भयचलित° D भयचकितलति° E *om.* चलित BD °बाहु° [6]) *om.* DE; B °भयानकमाह ॥ C स्त्रीनायकोदाहरणं [10]) E °नाथः [11]) *om.* DE; C नीचनायकोदा° B °भयानकमाह [12]) B कापापरुद्धः B सर्वाँगैर्वल° C सर्वांगैर्विगल° C °स्वेदबिंदु° BE °बिंदु° [13]) C त्वदारम्भैर्मं° D भवद्भोतैर्मं° C °हीपाल E °हीपल C °वंलिता° [14]) *om.* DE; B ॥ तयानुभावः ॥ C भयानु°

वैवर्ण्यमश्रु संत्रासो हस्तपादादिकम्पनम् ।
स्वेदास्यशोषदृक्क्षेपाः संभ्रमश्चात्र कीर्तितः ॥ २४ ॥

॥ अथ बीभत्सरसः ॥

जुगुप्साप्रकृतिर्ज्ञेयो बीभत्सो ऽहृद्यदर्शनात् ।
श्रवणात्कीर्तनाद्वापि पूत्यादिविषयो यथा ॥ २५ ॥

। तथोदाहरणम् ॥

लुठत्कृमिकलेवरं स्रवदसृग्वसावासितं
विकीर्णशवसंततिप्रसरदुग्रगन्धान्वितम् ।
भ्रमत्प्रचुरपक्षिकं त्रिकविवर्तिनृत्यक्रिया-
प्रवीणगुणकौणपं परिबभौ परेताजिरम् ॥ २६ ॥

अथानुभावः ॥

नासाप्रच्छादनं वस्त्रकूणनं गात्रसंवृतिः ।
निष्ठीवनादि चात्र स्यादुद्वेगादुत्तमेष्वपि ॥ २७ ॥

1) D वैवर्ण्यंगद्गदत्रासा E वैवर्ण्यं गद्गदस्त्रासो B संत्रासह्° 2) C स्वेदः श्वासो च दृक्क्षेप सं° D स्वेद स्वासो च दृक्क्षेपः B °दिक्प्रेक्षा E °दिक्प्रेक्षाः E °त्र जायते 3) *om.* DE B वी° C भीत्स° 4) C बीभत्साप्र° BD वी° C ह्रुवद्° 5) B पूजादि° D प्रेतादि° E पूत्यादेर्वि° CDE °यथायथा 6) *om.* DE; C अथो° 7) D लुटक्रि° cdd. °कलेवरं 8) B विरीाएं° BE °शव° C °र्णवम° From वसंत° to गुण° line 10 *om.* D B °सतति B °गधाड्द्वित E °गंधान्वितं 9) B °विवृत्रिकातिक्रियं D °विवृत्तनृत्य° 10) C *om* परि° B °भौ वृनो परे° C परेजिव 11) *om.* DE; C ततो नु° 12) C °प्रहला° E ° वणनं E °वणनं B °संहृति. C °सहृत्तिः D °सवृत्तिः 13) CE निष्टी° B स्यादुद्वेगो जायते रसः

॥ अथाद्भुतरसः ॥

विस्मयात्माद्भुतो ज्ञेयो रसो रसविचक्षणैः ।
मायेन्द्रजालदिव्यस्त्रीविपिनाद्युद्भवो यथा ॥ २८ ॥

॥ तथोदाहरणम् ॥

सत्यं हृता त्वया हंस वनितानामियं गतिः ।
भ्रमन्त्येतास्तथाप्येतदिन्द्रजालं तवाद्भुतम् ॥ २९ ॥

॥ अथानुभावः ॥

गद्गदः साधुवादश्च स्वेदः पुलकवेपथू ।
दृष्टेर्निश्चलतारत्वं विकाशश्चात्र जायते ॥ ३० ॥

॥ अथ शान्तरसः ॥

सम्यग्ज्ञानोद्भवः शान्तः समत्वात्सर्वजन्तुषु ।
गतेच्छो नायकस्तत्र मोहरागपरिक्षयात् ॥ ३१ ॥

॥ तथोदाहरणम् ॥

धनमहरहर्दत्तं स्त्रीयं यथार्थितमर्थिने
कृतमरिकुलं नारीशेषं स्वखड्गविजृम्भितैः ।
प्रणयिनि जने रागोद्रिक्ते रतिर्विहिता चिरं

1) *om.* DE 3) B माहेंद्र° C महेंद्र° D °विलोकनभवो यथा 4) *om.* cdd. 5) DE त्वया हृता 6) B °जालि C °जाल तदद्भुतं E तवे प्रिये 7) *om.* DE, B ततो नु° 8) B गद्गद D °वादः C स्नेह B °वेपथुः C °वेवे (*sic*) E °वेवथू 9) C विकारश्चात्र 10) *om.* BDE 12) B गतेच्छुर्ना° CDE तमोराग° B °परिक्षयात् 13) *om.* DE; C अथो° 14) D यदर्थित° 15) E *om.* स्व 16) D °द्रिक्ता

किमपरमतः कर्तव्यं नस्तनावपि नादरः ॥ ३२ ॥

॥ अथानुभावः ।

निरालम्बं मनो ऽन्यत्र बाढमात्मनि तिष्ठति ।
सुखे नेच्छा तथा दुःखे ऽप्युद्वेगो नात्र जायते ॥ ३३ ॥
अष्टाविति रसाः पूर्वं ये प्रोक्तास्तत्र निश्चितम् ।
प्रत्यनीकौ रसौ द्वौ द्वौ तत्संपर्कं विवर्जयेत् ॥ ३४ ॥
शृङ्गारबीभत्सरसौ तथा वीरभयानकौ ।
रौद्राद्भुतौ तथा हास्यकरुणौ वैरिणौ मिथः ॥ ३५ ॥
हास्यो भवति शृङ्गारात्करुणो रौद्रकर्मतः ।
अद्भुतश्च तथा वीराद्बीभत्साच्च भयानकः ॥ ३६ ॥
यौ जन्यजनकावेतौ रसावुक्तौ मनीषिभिः ।
युक्त्या कृतो ऽपि संभेदस्तयोर्गाढं न दुष्यति ॥ ३७ ॥
के चिद्रसविभागेषु भावाः पूर्वं प्रदर्शिताः ।
स्वातन्त्र्येणेह कीर्त्यन्ते रम्यास्ते कृतिनां मताः ॥ ३८ ॥

1) BE °रमित° 2) *om.* DE, B तथा° 3) E निराविलं CE यत्र D ह्यत्र BD वाढ° 4) E ततो CF दुःखे नोद्वेगस्तत्र D adds Sahityadarpanam 241 ( v. 3 °शोर्यंनया° v. 6 °गोऽत्र नि शंवहर्ग° ) 5) C अष्टाविह E अष्टावमी DE *om* ये D प्रयुक्तास्तत्र E यथोक्ता° 6) C प्रत्यनीकरसौ B adds: ॥ अथ रसविरोधो द्वौ द्वौ ॥ 7) F रसौ शृङ्गार बीभत्सौ 8) C *om.* वैरिणौ 10) E मद्भुतस्तु E °भत्सश्च भयानकात 11) C रसावुक्तो D रसौ प्रात्को (sic) 12) B युक्तायुक्तोऽपि D सदभंस्त° E °स्तयोर्गातु D °र्वाढ B दुष्यते 13) B °वि-रागेषु D पूर्वं न दर्शिताः 14) E °न्त्येनेह C रसास्ते कना

रत्यादय इमे भावा रसाभिप्रायसूचकाः ।
पञ्चाशत्स्थायिसंचारिसात्त्विकास्तान्निबोधत ॥ ३९ ॥
शृङ्गारादिरसेष्वेव भावा रत्यादयः स्थिताः ।
प्रत्येकं स्थैर्यतोऽन्ये च त्रयस्त्रिंशच्चरा यथा ॥ ४० ॥
[6]प्रायोऽनवस्थिते चित्ते भावाः संकीर्णसंभवाः ।
बाहुल्येन निगद्यन्ते तथाप्येते यथा स्थिताः ॥ ४१ ॥
शङ्कासूया भयं ग्लानिर्व्याधिश्चिन्ता धृतिः स्मृतिः ।
औत्सुक्यं विस्मयो हर्षो व्रीडोन्मादो मदस्तथा ॥ ४२ ॥
विषादो जडता निद्रावहित्थं चापलं मतिः ।
[10]इति भावाः प्रयोक्तव्याः शृङ्गारे व्यभिचारिणः ॥ ४३ ॥
श्रमश्चपलता निद्रा स्वप्नो ग्लानिस्तथैव च ।
शङ्कासूयावहित्थं च हास्ये भावा भवन्त्यमी ॥ ४४ ॥
दैन्यं चिन्ता तथा ग्लानिर्निर्वेदो जडता स्मृतिः ।
व्याधिश्च करुणे वाच्या भावा भावविशारदैः ॥ ४५ ॥
[15]हर्षोऽसूया तथा गर्व उत्साहोऽमर्ष एव च ।

[1]) DE भावा· E काव्याभि° [2]) B °स्तन्निबोधत [3]) D स्मृता: [4]) D प्रत्येकं स्थायिनो [6]) B *adds:* ॥ अथ भावनरसविषयोत्पत्तिमाह ॥ [7]) E ° विदिच-तजता धृतिः CD स्मृतिधृ'तिः [8]) D °न्मादो C रतिस्तथा [9]) D विषादं C [11]वहित्या B °वहित्या D धृतिः [12]) D °सूयावहित्था [13]) B °निवेदो CD धृतिः E मृति (sic) [14]) C °णे ज्ञेया D *om*, भावा E भावविचक्षणैः [15]) D हर्षासूया तथा गर्वेमु° CDE मद instead of ऽ मर्ष

चापल्यमुग्रतावेगो रौद्रे भावाः प्रकीर्तिताः ॥ ४६ ॥
अमर्षः प्रतिरोधश्च वितर्कोऽथ मतिर्धृतिः ।
क्रोधो ऽसूया श्रमो मोह आवेगो रोमहर्षणम् ॥ ४७ ॥
गर्वो मदस्तथोग्रत्वं भावा वीरे भवन्त्यमी ।
संत्रासो मरणं चैव वचनीयं भयानके ॥ ४८ ॥
अपस्मारो विषादश्च भयं रोगो मतिर्मदः ।
उन्मादश्चेति विज्ञेया भावा बीभत्ससंभवाः ॥ ४९ ॥
आवेगो जडता मोहो हर्षणं विस्मयो मतिः ।
इति भावान्निबध्नन्ति रसे ऽस्मिन्नद्भुते बुधाः ॥ ५० ॥
एवं संचारिणो ज्ञेया भावाः प्रतिरसं स्थिताः ।
सात्त्विकास्तु भवन्त्येते सर्वे सर्वरसाश्रिताः ॥ ५१ ॥

॥ अथ चतस्रो वृत्तयः ॥

कैशिक्यारभटी चैव सात्त्वती भारती तथा ।
चतस्रो वृत्तयो ज्ञेया रसावस्थानसूचिकाः ॥ ५२ ॥

[1]) E वाचोग्रमप्यतावेगो D °ग्रता चैव रोद्र C भावा भवन्त्यमी [2]) B अमर्ष E अमप E प्रतिवेगश्च वितर्कश्च मति° C om. S थ [3]) B क्रोधासूये C सूया च मंहर्ष आवेगो D सूर्याश्रु संमोह E ऽसूयाय सहर्ष आवेगो °र्दणा. D आवेग. रोपह° [5]) B वाचनीया [7]) D °संस्थिता· [8]) B जडा मोह C आवेगो मोहो विस्मयो हर्षणं स्मृतिः D विस्मयो हर्षणं धृतिः E विस्मय. स्मृतिः [9]) D °निबध्नाति D बुधः [10]) B प्रतिरसे [11]) C °रसालयाः D °रिसस्थिताः E °रसान्विता. [12]) om. DE; C om. चतस्रो BC रीतय [13]) Stanza 52 is om. in BE; C कौशि° C त्वेव [14]) BC °सूचका·

॥ अथ कैशिकी ॥

या नृत्यगीतप्रमदोपभोगवेषाङ्गसंकीर्तनचारुचन्द्रा ।
माधुर्ययुक्तात्पसमासरम्या वृत्तिः स्मृतासाविह कैशिकीति ॥ ५३ ॥

शृङ्गारहास्यकरुणारसातिशयसिद्धये ।
[5]एषा वृत्तिः प्रयत्नेन प्रयोज्या विबुधैर्यथा ॥ ५४ ॥

सौन्दर्यं शशलाञ्छनस्य कविभिर्मिथ्यैव तद्वर्ण्यते
शोभेयं क नु पङ्कजस्य रजनीसंयोगभग्नात्विषः ।
इत्यालोच्य चिराय चारु रुचिरं त्रस्यत्कुरङ्गीदृशो
वीक्षेते नवयौवनोन्नतमुखौ मन्ये स्तनावाननम् ॥ ५५ ॥

[10]हस्तेषुः कुसुमायुधस्य ललितं रागश्रियो लोचनं
सौभाग्यैकगृहं विलासनिकषो वैदग्ध्यसिद्धिध्वजः ।
साक्षीदं मधुमाधवस्य निभृतं कस्यापि लीलानिधेः
कक्षान्तर्नखमण्डलं सखि नवं प्रच्छादयता वाससा ॥ ५६ ॥

[1]) *om.* BDE; C °कोसलसं [2]) C गीतनृत्यप्रम° C *om.* वेषाङ्ग E °देशांग° D °वंधाः [3]) CD वाणी E वाणी instead of वृत्तिः C स्मृता सा इ कौशि° [4]) C °रसाना परिवृद्धये [5]) C एषा वृत्ति एषा प्र° E प्रायो वाच्या बुधैर्यथा [6]) In C st. 56 is placed before st. 55. BC शशि° D सं-स्तूयते [7]) C सौभाग्यं क्व E शाने द्य् क्व With पङ्कजस्य A recommences ACD °संभोग° C °विषः D °त्विषा· [8]) A रुचिरा C रुचिर E रुचिमत् CE त्रस्यन्मृगीचक्षुषो [9]) A वीक्ष्येते B दृश्येते A नवयवनोन्नतमुद्दृमन्ये तथा यौवनम् C नवयौवयोद्धत° E नवयौवनोद्धतमुन्येस्ततावानतं (sic) [11]) A सौभाग्यैनिकेतनं परिलसद्वैदग्ध्यसिद्धद्विज. E °निकषो C वैदग्ध° B °सिद्धिध्वजः [12]) A लेला° C लिला° E °सावधिः [13]) B कक्षांत° ABCD °मण्डनं E स्कंधांतर्नखमडलं A °च्छादयते

समुल्लसत्काञ्चनकुण्डलोज्ज्वला प्रभापि तापाय बभूव ये-
ष्वलम् ।
विलासिनीरम्यमुखाम्बुजन्मसु प्रजज्वलुस्तेष्वकृशाः कृशा-
नवः ॥ ५७ ॥

॥ अथारभटी ॥

या चित्रयुद्धभ्रमशस्त्रपातमायेन्द्रजालप्लुतिलङ्घिताढ्या ।
ओजस्विवर्णाद्भुतदुर्विगाह्या ज्ञेया बुधैः सारभटीति वृत्तिः ॥ ५८ ॥
रौद्रे भयानके चैव बीभत्से च विचक्षणैः ।
काव्यशोभाकरी वृत्तिरियमित्थं प्रयुज्यते ॥ ५९ ॥
शस्त्रोद्दारितकुम्भिकुम्भविगलद्रक्ताक्तमुक्ताफल-
स्फारस्फूर्जितकान्तिकल्पितमहद्धवच्चतुष्काचितम् ।
क्रोधोद्धावितधीरघोररणिरणत्खड्गाग्रमुग्राग्रहं
युद्धं सिद्धवधूगृहीतसुभटं जातं तदा दुर्धरम् ॥ ६० ॥
नायं गर्जिरवो गभीरपरुषं तूर्यं तदीयं त्विदं

[1]) A °च्चमण्डलोज्ज्वलप्रतापि BC °ज्ज्वलत्प्रभा° D °लोज्ज्वला प्रतापि E °ज्ज-लप्रभाति BD तावदत्र बभूव C ताव प्रबभूव E बभूवापदालं D केवल [2]) A om. कृशाः A कृशाएव: [3]) om. ADE ) A चित्र° C °युद्ध° D °बद्ध° ADE °भ्रम° C °श्रम° B °माहेन्द्र° AC °प्लुत° E °प्लुतंमयनाढ्या B °लंघिताध्वा C °ताद्या [5]) E जस्विगुर्वक्षरगाडबन्धा C ओजस्विगुर्वक्षरबन्धगाढा AD °वर्णाद्भुत° BD °गाह्या A °भटेति [7]) AD काव्ये शो° B °शोभाकरो E प्रकीर्तिता [8]) D शस्त्रोद्दारित° B शस्त्रो° A °द्दारि° D रक्तार्द्रमु° A °फलं C °फलं D °फले [9]) B °स्फूर्जिति° (sic) C °स्फुर्जि° ACD °काचितम् [10]) B क्रोधाद्धावितवीर° C क्रोधोद्धावि° D कुद्धोद्धावित° E कुद्धोद्भासितवीर° AC °घोरण° BCD °लस-त्खड्गा° A मुग्रग्रहं E °ग्रावहं [11]) B om. युद्धं In A above टं in सुभटं is written गं [12]) B गर्ज° C गर्जितवा B तुर्यं E तोयं तदीयन्नहं B त्विते

[1]नैते भीमभुजंगभोगरुचयो मेघा इमे तद्गजाः ।
इत्थं नाथ नवाम्बुवाहसमये त्वत्सैन्यशङ्काकुला
म्लायद्वक्त्ररुचो विरोधिवनितास्त्रस्यन्ति नश्यन्ति च ॥ ६१ ॥
पिबन्नसृगदन्मांसमाकर्षन्नन्त्रमालिकाम् ।
कबन्धसंकुले क्रोष्टा भ्रमत्येष महारणे ॥ ६२ ॥

॥ अथ सात्त्वती ॥

हर्षप्रधानाधिकसत्त्ववृत्तिस्त्यागोचरोदारवचोमनोज्ञा ।
आश्चर्यसंपत्सुभगा च या स्यात्सा सात्त्वती नाम मताश्च वृ-
त्तिः ॥ ६३ ॥

नातिगूढार्थसंपत्तिः श्रव्यशब्दमनोरमा ।
[1]वीरे रौद्रे ऽद्भुते शान्ते वृत्तिरेषा मता यथा ॥ ६४ ।
लक्ष्म्यास्त्वं जनको निधिश्च पयसां निःशेषरत्नाकरो
मर्यादानिरतस्त्वमेव जलधे भूते ऽत्र को ऽन्यादृशम् ।
किं त्वेकस्य गृहागतस्य वडवावह्नेः सदा तृष्णया
क्लान्तस्योदरपूरणे ऽपि न सहो यत्तन्महन्मध्यमम् ॥ ६५ ॥

1) B om. नैने A वैते 2) B °भुज 3) BE om. म्ला BCE °वनिता (in C twice) B नस्यंति 4) A पिबन्नमृक् त्वदन्मा° D पिबन्नमृक् स्वदन्मा° BC पिबन्न° B °मालि C °मालिका 5) BD कबंध° B °सकटे B °संकुलो B महारणे 6) om. ADE; B °तोमाह 7) A °धिकमत्स्यबुद्धचा त्या° B °सत्त्वस्या° A °रोदार° 8) BD मता च E मता प्रवृत्ति° 9) C श्रव° D °शब्दाम° 10) B रौद्राद्भुते B °रेषात्र कथ्यते 12) B को न्याह° E न्यादृशे 13) B त्वेतस्य edd. वडवा° 14) D क्लांतस्यो° E °पूरणं न सहशे A °न्मध्यम् B यत्तन्मनाङ्मध्यमं D °न्महान्मध्यमः E यत्नन्मनाराकमध्यम

स्फारितात्कटकठोरतारका कीर्णवह्निकणसंततिः क्रुधा ।
दुर्निमित्ततडिदाकृतिर्बभौ दर्शिरिष्टमगंशुमालिनः ॥ ६६ ॥
अत्यद्भुतं तव नराधिप कीर्तिर्धवलयत्यपि जगन्ति ।
रक्तान्करोति सुहृदो मलिनयति च वैरिवदनानि ॥ ६७ ॥
निवृत्तविषयासङ्गमधुना सुचिराय मे ।
आत्मन्येव समाधानं मनः केवलमिच्छति ॥ ६८ ॥

॥ अथ भारती ॥

प्रधानपुरुषप्राया सद्वक्रोक्तिनिरन्तरा ।
भारतीयं भवेद्वृत्तिर्वीरहास्याद्भुताश्रया ॥ ६९ ॥
जन्मदेहवधवेदनादिकं तुल्यमेतदितरैः समं सताम् ।
यत्तथापि विपुलाश्चलाः श्रियः साहसैकपरतात्र कारणम् ॥ ७० ॥
यशोदाकृतरक्षस्य शासितुर्भुवनद्रुहाम् ।
बाल्ये निभृतगम्भीरो हरेर्हासः पुनातु वः ॥ ७१ ॥

[1]) A *om.* st. 66. C places st. 67 before st. 66 B स्पष्टतोत्कट° E स्फारितोदार' D वांतवह्नि° [2]) D °मित्रघटदाकृ° C °रिष्टि° D °समवायशालिनः E समरैकमालिनः [3]) [illegible] इत्य° B नरपते तव CDE नराधिप तत्र A °लयन्त्यपि C °लयत्यपि [4]) A रचना C मित्र° A °नयन्ति A *om.* च [5]) B निवृत्ति' AC °मधुर B सुचिरामये C °रात्मम E ते [6]) C °धानं [7]) *om.* ABDE; C adds रीतिः [8]) A °प्रायः E °पुरुषोत्था या सद्व° D सत्वोद्रिक्त° [10]) A 1. hd. °देहवदा° corr 2. hd.; D °देहसुखवेद° E देहघनवेद° A नाधिकं A °दितनैस्समं सतां D सता [11]) A °ला चलश्रियः C °ला चला श्रिय B साहसैकपरता न का° A °परतात्मका° or °तात्मका° E °परता नु का° [12]) D शशितु° C °तुर्भंजन' [13]) A नात्रौ निभृ° ग° C हरेर्हासो A न.

निर्भयो ऽप्येष भूपालस्तद्ददाति द्विषां युधि ।
दिगन्तेषु यशः शुभ्रमादत्ते चेदमद्भुतम् ॥ ७२ ॥

इत्यादि रम्याः प्रविलोक्य सूचीर्दृष्ट्वा निबन्धांश्च महाकवीनाम् ।
आलोक्य चौचित्यमिदं विदध्यात्काव्यं कविः सज्जनचित्तचौरम् ॥ ७३ ॥

विरसं प्रत्यनीकं च दुःसंधानरसं तथा ।
नीरसं पात्रदुष्टं च काव्यं सद्भिर्न शस्यते ॥ ७४ ॥

विहाय जननीमृत्युशोकं मुग्धे मया सह ।
यौवनं मानय स्पष्टमित्यादि विरसं मतम् ॥ ७५ ॥

प्रबन्धे नीयते यत्र रस एको निरन्तरम् ।
[10]महतीं वृद्धिमिच्छन्ति विरसं तच्च के चन ॥ ७६ ॥

नखक्षतोच्छलद्रक्तप्लुतगण्डस्थलं रतौ ।

[1]) A निर्भये ऽप्येष भूपालो नस्तद्द B भूपाल भयं ददाति D प्येष स भूपालस्तद्ददा (sic) [2]) A··· ··त्तेषु य ·भ्रमा° CE यसस्तेषु D श्रंसतीपून् B °माधत्ते D चेद्मुतं E वैतदद्भुत [3]) A रस्याः B रम्या A प्रविलासवृत्ते इ° B प्रयोगाश्च [4]) D विलोक्य A वैचित्र्यमिदं B मौचि° C चौचित्य D वैचित्र्यमलं E वैचित्र्य मल A °चौरान् D °चोरं [5]) A प्रत्यनी ····दुस्सं° [6]) CE च न (om. E) सद्भिः काव्यं न श A om. च A सद्भिर्निन्द्य° C adds: ॥ विरसं यथा ॥ [7]) B जनजी° A °मृत्युषशोकं E जननी विहाय मृत्युशोकं दुःखे मया सह [8]) A स्पष्ट° ACD विरसं यथा E स्मृतं [9]) B मीयते ACE यस्तु [10]) E महंती वृत्त निच्छंति VB वृत्तिमि° B निरसं तत्र D केवलं [11]) A नरवक्षोन्छलत्पूतिप्लुत° C °लत्पूयप्लुत° D°लत्पूयप्लुतं गंड° E नखक्षानाल्लसत्पूतिप्लुत° B °द्रक्तस्फुटगंड°

स्मरामि वदनं तस्याः प्रत्यनीकमिदं भवेत् ॥ ७७ ॥
तामेवानुचितां गच्छ ज्वलिता त्वत्कृते ऽत्र या ।
किं ते कृत्यं मया धूर्त दुःसंधानरसं त्विदम् ॥ ७८ ॥
दुर्जनो दयितः कामं मानो म्लानो मनोभवः ।
कृशो वियोगतप्तायास्तस्या इत्यादि नीरसम् ॥ ७९ ॥
मुग्धा व्याजं विना वेश्या कन्येयं निपुणा रतौ ।
कुलस्त्री सर्वदा धृष्टा पात्रदुष्टमिदं मतम् ॥ ८० ॥
अन्येष्वपि रसेष्वेते दोषा वर्ज्या मनीषिभिः ।
यत्संपर्कान्न यात्येव काव्यं रसपरम्पराम् ॥ ८१ ॥
इति मया कथितेन यथामुना रसविशेषमशेषमुपेयुषी ।
ललितपादपदा सदलंकृतिः कृतधियामिह वाग्वनितायते
॥ ८२ ॥

शृङ्गारतिलको नाम ग्रन्थो ऽयं रचितो मया ।

[1] A प्रतिनीरसं यथा B °कमिद कृत E °कमिद मतं B° adds ॥ इति प्रत्यनीकः ॥ अथ दुःसंधानरस ॥ [2]) A ज्वलिताक्ष कृते स्त्ययाम् । यौवनं मानवस्येष्टमित्यादि विरस यथा ॥ CD तु या E ह वा [3]) AD कृते C कार्यं A °सन्धारसं C दुस्सधीन° D °धानमिदमिद AD मतम् [4]) C *om* stanza 79; B has before ॥ अथ नीरसं ॥ A दयितx को पि DE मनो BD म्लानं A मनाग्युवा ॥ मनोमुवा E मनोभवः [5]) D वियोगसंतप्तस्त° A दूरनादि E ऽत्यादि [6]) B has before : ॥ अथ पात्रदुष्टं ॥ A वश्या° ) A हृष्टा A ° दुष्टं चिद [8]) A रतेष्वेते [9]) A यत्सम्प° B यत्येव D यात्येवं A काव्यो रस° E कविपरंपरा A रसपरं स्मृतम् C *om.* पराम् [10]) D अथ कथितो यमयोत्तमा ( corr. to कथितेयम° ? ) सवि° A °पेयुपाम् C °पेयुपा [11]) D ललितं चारुपदा E ललिते C °धिया वा° A वा वनि° [12]) A कथितो CD ग्रथितो E थितो

व्युत्पत्तये निषेवन्ते कवयः कामिनश्च यम् ॥ ८३ ॥

कान्या काव्यकथा कीदृग्वैदग्धी को रसागमः ।

किं गोष्ठीमण्डनं हन्त शृङ्गारतिलकादृते ॥ ८४ ॥

त्रिपुरवधादेव गतामुल्लासमुमां समस्तविबुधनुताम् ।

[5]शृङ्गारतिलकविधिना पुनरपि रुद्रः प्रसादयति ॥ ८५ ॥

॥ इति श्रीरुद्रभट्टविरचिते शृङ्गारतिलकाभिधाने काव्या-

लंकारे तृतीयः परिच्छेदः ॥

[1] A निषेवन्तु कवय X कामिनस्स्वयम् B कामिनः स्वयं C कामिनश्च E ये B काम्या CD रम्या E काव्या B कीदृक् वैदग्ध्ये A °ग्वेदग्ध्ये [3]) CD गोष्ठी° E गोष्ठीविबुधे. सार्द्धं शृ° ACD ° तिलक विना D °वधदेवतामुचितोल्ला° E गता-म्रहुलासमभाउतीमुल्लामुमा C ° विबुनता D °विबुधनतां E °विबुधाना E °नुतं A °लकं वि° [4]) E रुद्रः सदा प्र° B प्रकटयति [5]) A: ॥ इति श्रीमद्रुद्रटविरचिते °काव्ये काव्यलङ्कारे तृतोयः परिच्छेदः ॥

B: ॥ इति श्रीशृंगारतिलके श्रीरुद्रविरचिते काव्यालंकारे तृतीयः परिच्छेदः समाप्तः ॥

सहानुभावव्यभिचारिभिः समं समेत्य तद्वत्सह सात्विकैश्च ।
आलंबते सर्वरसानतो यमालंबनस्तेन भवेद्विभावः ॥
[illegible] चानुभावव्यभिचारियोगं नापेक्षते सात्विकभावयोगं ।
उद्दीपयेत् केवलमेव यस्मादुद्दीपनस्तेन भवेद्विभावः ॥

॥ संवत् १६५४ समये भाद्रसुदि १० शुक्रे लिखितं ॥ In margin of fol. 30b above stands with thick letters : काव्यालंकारे [illegible] शृंगारः

C: ॥ इति श्रीरुद्रभट्टविरचिते शृंगारतिलके काव्यालंकारे रसनिरूपणे ना तृतीयः परिछेदः समाप्तम् संपूर्णम् ॥ समाप्तश्चायं शृंगारतिलकनामको ग्रंथः ॥ शुभमस्तु ॥ श्रीरामाकृष्णाय नमः ॥ श्रीजानकीवल्लभाय नमः ॥ छ ॥ छ ॥ छ ॥ From दः in परिछेदः written by an other hand with great letters. At fol. 34b stands : रुद्रभट्टकृतशृंगारतिलक अलंकार सं ७५० and with thin letters : का° सं २८

D : ।। इति शृंगारतिलके तृतीय परिच्छेदः ॥ ।। इति रुद्रभट्टविरचिते काव्यालकारे शृंगारतिलकाभिधाने तृतीयः परिछेदः ।।

E : ।। इति श्रीभट्टश्रीरुद्रविरचिते शृंगारतिलके काव्यालकारे तृतीय. परिछद. ।। इति शृंगारतिलक समाप्तः ।।

भग्नपृष्टिकटिग्रीवस्तब्धदृष्टिरधोमुख ।

कष्टेन लिखित ग्रथ यत्नेन परिपालयेन ।। १

संवत् १८७७ अषाढ शुक्ल ३ गुरुवासरे ।।

---

## ॥ अथोदाहरणप्रतीकानि ॥

---

श्रीमतामुत्कर्षपरिज्ञानाद्वैदग्ध्येन सहृदयत्वान्नागरिकतासिद्धिः ॥ १ ॥ युवत्यादीनामुत्कर्षो देहे गुणालंकारजीवितपरिकरेभ्यः ॥ २ ॥ तत्र । शोभाविधायिनो धर्मा गुणाः ॥३॥

रूपं वर्णः प्रभा राग आभिजात्यं विलासिता ।

लावण्यं लक्षणं छाया सौभाग्यं चेत्यमी गुणाः ॥ ४ ॥

अवयवानां रेखास्पाष्ट्यं रूपम् ॥ ५ ॥ गौरत्वादिधर्मविशेषो वर्णः ॥ ६ ॥ काचकाच्यरूपा रविवत्कान्तिः प्रभा ॥ ७ ॥ नैसर्गिकस्मेरत्वमुखप्रसादादिः सर्वेषामेव चक्षुर्बन्धको धर्मो रागः ॥ ८ ॥ कुसुमधर्मा मार्दवादिर्लालनादिरूपः स्पर्शविशेषः पेशलतारूप आभिजात्यम् ॥ ९ ॥ अङ्गोपाङ्गानां यौवनोद्भेदी[10] मन्मथवासनाप्रयुक्तः कटाक्षादिर्वाद्विभ्रमाख्यश्चेष्टाविशेषो विलासिता ॥ १० ॥ तरङ्गिद्रवस्वभावाप्यायिनेत्रपेयच्छायापिस्निग्धमधुर इव प्रीतिमोत्कर्षैकसार इव पूर्णेन्दुवदाह्लादको धर्मः संस्थानमुग्धिमव्यंग्यो लावण्यम् ॥ ११ ॥ अङ्गोपाङ्गानामसाधारणशोभाप्राशस्त्यहेतुरौचित्यात्मा स्थायी धर्मो[15]

[1]) A O स्वस्ति ॥ B ओ अथ सहृदयलीला लिख्यते ॥ [2]) B देहगुणा° [5]) A रागः B मादिजात्य [8]) A काच्यकच्य'' A नैसर्गिकः स्मेर' [10]) [illegible] कुसुमसधर्मा मार्दवादि' A °लालनाभ्यो रूपस' [14]) A 'व्यङ्गो A 'पाङ्गामसाधारणः शो° [15]) A 'चित्यात्स्थायी

लक्षणम् ॥ १२ ॥ तस्य युक्तप्रमाणतादोषस्पर्शस्निग्धत्वक्कनियतलोमाङ्गसुश्लिष्टसंधानतानाहपरिणाहौचित्यचक्रपद्मादिलेखाङ्कनायोगेभ्यः प्रसिद्धाङ्गपूर्णतादोषवैकल्यधर्मसौन्दर्यप्रमाणौचित्यलोकाप्रसिद्धविशिष्टाङ्गयोगाख्याः क्रमेण षड् भेदाः ॥ १३ ॥ अग्राम्यतया वक्रिमलवव्यापिनी ताम्बूलपरिधाननृत्तभणितिगमनादिस्थानकेषु सूक्ष्मा भङ्गिश्छाया ॥ १४ ॥ स्फुरल्लक्ष्म्युपभोगपरिमलादिगम्यो ऽन्तःसारो रञ्जकतया वशीकर्ता सहृदयसंवेद्यधर्मभेदश्च सौभाग्यम् ॥ १५ ॥ तत्राद्ये स्मरमदपुलकादयो भेदाः । अन्त्ये तु भणितरूपपरिभोगाधरास्वादसौरभादिभिर्युगपद्रसवत्त्वात्पञ्चेन्द्रियसुखलाभः ॥ १६ ॥

॥ इति श्रीराजानकरुय्यकविरचितायां सहृदयलीलायां गुणोल्लेखः प्रथमः ॥

रत्नं हेमांशुके माल्यं मण्डनद्रव्ययोजने ।
प्रकीर्णं चेत्यलंकाराः सप्तैवेते मया मताः ॥ १ ॥

तत्र । वज्रमुक्तापद्मरागमरकतेन्द्रनीलवैडूर्यपुष्परागकर्केतन-

[1]) B °णताऽदोष° A °दोषास्प° A °नियतलोमाङ्ग° [4]) B °चित्याद्या-लोकाप्रसिद्धावि° [5]) B वक्रिमलवव्या° [6]) B भङ्गिश्छाया स्मरमदभो ॥ उपभोग° [7]) B om. मलादि A न्तस्सारो B न्तस्सारो [10]) A °भाधार° B °भाधारास्कु-सभसौर° A °न्द्रियांसुख° [13]) B adds ॥ १ ॥ [14]) A या B ॥ श्रीगणेशाय नमः ॥ [15]) B प्रकीर्णं [16]) B पुष्पराग° A °कर्केतक° B °कर्के°

पुलकरुधिराक्षभीष्मस्फटिकप्रवालरूपाणि त्रयोदश रत्नानि ॥ २ ॥ हेम नवधा । जाम्बूनदशातकौम्भहाटकवैणवशृङ्गीशुक्तिजजातरूपरसविद्धाकरोद्गतभेदात् ॥ ३ ॥ चतुर्धा रत्नहेममयः । आवेध्यनिबन्धनीयप्रक्षेप्यारोप्यभेदात् ॥ ४ ॥ तत्र । ताडीकुण्डलश्रवणवालिकादिरावेध्यः । अङ्गदश्रोणीसूत्रमूर्धमणिशिखादहिकादिर्निबन्धनीयः । ऊर्मिकाकटकमञ्जीरसदृशः प्रक्षेप्यः । प्रालम्बमालिकाहारनक्षत्रमालाप्रभृतिरारोप्यः ॥ ५ ॥ चतुर्धांशुकमयः । त्वक्फलकृमिरोमजत्वात्क्रमेण क्षौमकार्पासकौशेयराङ्कवादिभेदात् ॥ ६ ॥ पुनस्त्रिधा निबन्धनीयप्रक्षेप्यारोप्यवैचित्र्यात् ॥ ७ ॥ तत्र । निबन्धनीयः शिरःशाटकजघनवसनादिः । प्रक्षेप्यः कञ्चुलिकादिः । आरोप्य उत्तरीयपटादिः ॥ ८ ॥ सर्वस्यास्यानेकविधत्वं वर्णविच्छित्तिनानात्वात् ॥ ९ ॥ ग्रथिताग्रथितवशाद्विविधः सन्नष्टधा माल्यमयः ॥ १० ॥ वेष्टितविततसंघात्यग्रन्थिमदवलम्बमुक्तकमञ्जरीस्तवकलक्षणमाल्यभेदेन ॥ ११ ॥ तत्रोद्वर्तितं वेष्टितम् । पार्श्वतो विस्तारितं विततम् । बहुभिः पुष्पैः समूहेन रचितं संघात्यम् । अन्तरान्तरा विषमं ग्रन्थि-

1) B °स्फटिकविद्रुमरूपाणि *add.* °प्रवाल° 3) B शुक्तिजातरूप° B रत्नेहसमय। 4) A °भेदेन A *om.* तत्र B *om.* ताडी 5) B °श्रोणि° 6) A ऊर्मिकटक° 7) A प्रलम्ब° A °नक्षत्र° A °क्रिमि° B °क्रमि° 9) B क्षोम° B °भेदः 10) A °चित्र्यात् B °रोप्यभेदात् A *om.* तत्र B शिरश्चाटक° 11) A प्रक्षेप्य 12) B वलवि° 13) B °वशात्पुनर्द्विविध 14) A °संघात्य° 15) AB °स्तवक° A *om.* तत्र 17) A संघात्यम् B °रा ग्रन्थिमद्विषमम् ।

मत् । स्पष्टोम्भितमवलम्बम् । केवलं मुक्तकः । अनेकपुष्पमयी लता मञ्जरी । कुसुमगुलुच्छं स्तवकः ॥ १२ ॥ नस्यावेध्यादयो ऽपि चत्वारो भेदाः ॥ १३ ॥ कस्तूरीकुङ्कुमचन्दनकर्पूरागुरुकुलकदन्तसमपटवाससहकारतैलताम्बूलाल[6]क्तकाञ्जनगोरोचनादिनिर्वृत्तो मण्डनद्रव्यमयः ॥ १४ ॥ भ्रूघटालकरचनाधम्मिल्लग्रन्थादियोजनामय ॥ १५ ॥ द्विधा प्रकीर्णमयः ॥ १६ ॥ जन्यनिवेश्यभेदेन ॥ १७ ॥ श्रमजलमधुमदादिर्जन्यः । दूर्वाशोकपल्लवयवाङ्कुररजतत्रपुशङ्खतालदलदन्तपत्त्रिकामृणालवलयकरक्रीडनकादिर्निवेश्यः ॥ १८ ॥ [10]एतत्समवायो वेषः ॥ १९ ॥ स च देशकालप्रकृत्यवस्थासाम्येनैतेषां विच्छित्त्या यथास्थाननिवेशनपरभागलाभाद्रामणीयकवृद्धिः ॥ २० ॥

॥ इति सहृदयलीलायामलंकारोल्लेखो द्वितीयः ॥

शोभया अनुप्राणकं यौवनाख्यं जीवितम् ॥ १ ॥ बाल्या[15]नन्तरं गात्राणां वैपुल्यसौष्ठवविभक्ताविधायी स्फुटितदाडिमोपमः स्मरवसतिरवस्थाभेदो यौवनम् ॥ २ ॥ तस्य वयःसंधिरारम्भः ॥ ३ ॥ मध्यं तु प्रौढिकालः ॥ ४ ॥ प्रथमे

[1]) B °तवल [2]) B कुसुमातलर्द्धं AB स्तवकः [3]) B कस्तूरी° B *om.* कुलकदन्तसम A °दत्त° [6]) B °धम्मिल° [7]) A °मधू° [8]) B °पत्त्रिका° [10]) AB वेशः B स चेद्देशकालप्रकृत्य° [13]) A *om.* इति [14]) A श्रो B श्रीगणेशाय नमः ॥ A बाल्यान्तरं [15]) B मदस्फुटो दाडिमोपमः ॥ स्मर° [17]) B °रम्भा

है। मैं भी काव्य में रसों की स्थिति का निरूपण अपनी बुद्धि के अनुसार कर रहा हूँ ॥ ५ ॥

व्यतिरेक दृष्टान्त से रस की प्रशंसा—

जिस प्रकार चन्द्रमा के बिना रात्रि की, पति के बिना स्त्री की और त्याग ( दान ) के बिना लक्ष्मी ( धन ) की शोभा नहीं होती, वैसे ही रस से रहित वाणी की शोभा नहीं होती ॥ ६ ॥

अपने पाण्डित्य की प्रशंसा—

यह सच है कि घर-घर में अच्छे-अच्छे कवि हैं जिनकी वाक्चातुरी कुलवधू के समान अपने स्वाभाविक गुणों से अपने महल में ही गौरव प्राप्त करती है। किन्तु जिसकी वाणी सुहृदों के चित्तों को हरण करने में कलाओं में कुशल वेश्या की भाँति सक्षम है, ऐसा कोई विज्ञ कवि दुष्प्राप्य है। [ 'कलाकलापकुशला' वाक् ( वाणी ) और पण्यस्त्री दोनों का विशेषण है ] ॥ ७ ॥

इसलिए यत्नपूर्वक रसयुक्त ( सरस ) काव्य की रचना करना चाहिए, अन्यथा रसज्ञों की गोष्ठी में वह ( काव्य ) ऊब उत्पन्न करनेवाला होता है ॥ ८ ॥

शृङ्गार, हास्य, करुण, रौद्र, वीर, भयानक, बीभत्स, अद्भुत और शान्त—ये नौ प्रकार के रस काव्य में होते हैं ॥ ९ ॥

रति, हास, शोक, क्रोध, उत्साह, भय, जुगुप्सा, विस्मय और शम—ये [ क्रमशः उपर्युक्त नौ रसों के ] स्थायी भाव कहलाते हैं ॥ १० ॥

निर्वेद, ग्लानि, शङ्का, असूया, मद, श्रम, आलस्य, दैन्य, चिन्ता, मोह, स्मृति, धृति, व्रीडा, चपलता, हर्ष, आवेग, जडता, गर्व, विषाद, औत्सुक्य, निद्रा, अपस्मार, स्वप्न अवबोध, अमर्ष, अवहित्थ उग्रता, मति, व्याधि, उन्माद, मरण, त्रास और वितर्क—ये तैंतीस व्यभिचारी भाव हैं और रस की स्थिति को प्राप्त होते हैं ॥११-१४॥

स्तम्भ, स्वेद, रोमाञ्च, स्वरभङ्ग, वेपथु ( कम्पन ), वैवर्ण्य, अश्रु और प्रलय—ये आठ सात्त्विक [भाव] कहलाते हैं ॥ १५ ॥

[ 'प्रलय. सुखदुःखाद्येर्गाढमिन्द्रियमूर्च्छनम्'—प्रतापरुद्र, अर्थात्, 'सुख' दुःख आदि से इन्द्रियों का विशेष मूर्च्छित होना प्रलय कहलाता है'। ]

जैसे विभिन्न द्रव्य मधुर आदि रसात्मकता को प्राप्त होते है [वैसे ही] ये (उक्त) भाव ही जब अत्यन्त सम्पन्न होते है तब रसत्व को प्राप्त होते हैं ॥ १६ ॥

जैसे वृक्ष में पत्र, पुष्प और फल आदि निकलते हैं, वैसे ही रस में भी सुन्दर और विशेष भावरूपी पत्र, पुष्प और फल आदि उत्पन्न होते हैं ॥ १७ ॥

प्राय. एकरस वाला कोई काव्य उपलब्ध नहीं होता, फिर भी जो रस उसमें

बहुलता से होता है, काव्य में होने के कारण वही ( रस ) [ उस काव्य का ] कहा जाता है ॥ १८ ॥

कैशिकी, आरभटी, सात्त्वती और भारती—रस की अवस्थिति को सूचित करने वाली ये चार वृत्तियाँ हैं ॥ १९ ॥

धर्म से अर्थ, अर्थ से काम, और काम से सुखरूप फल की उत्पत्ति होती है। उसकी ( सुखफलोदय की ) सिद्धि के लिये शृङ्गार ही अपेक्षाकृत अधिक साधक है, इसलिये यह सभी रसों का नायक है ॥ २० ॥

[ परस्पर ] अनुरक्त पुरुष और स्त्री को काम से उत्पन्न जो चेष्टा होती है, [उसे शृङ्गार कहते हैं। ] यह शृङ्गार दो प्रकार का माना गया है—१. सम्भोग और २. विप्रलम्भ ॥ २१ ॥

संयुक्त [ पुरुष और स्त्री ] की चेष्टा को सम्भोग और वियुक्त [ पुरुष और स्त्री ] की चेष्टा को विप्रलम्भ शृङ्गार कहते हैं। यह ( शृङ्गार ) पुनः प्रच्छन्न और प्रकाश के भेद से दो प्रकार का होता है। जैसे—॥ २२ ॥

## सम्भोग शृङ्गार का उदाहरण—

मदोन्मत्त हाथी के मस्तक के तट के समान दोनों स्तनों के चारों ओर स्फुरणशील अंगुलियों वाले प्रिय के नखक्षत करने वाले वाम ( बुरे ) हाथ को भी प्रिया ने दक्षिण ( अच्छा ) ही माना ॥ २३ ॥

## विप्रलम्भ [ शृङ्गार ] का उदाहरण—

अपने प्रिय के वियोग से दुःखित इस ( नायिका ) का अधर रागिता ( अनुराग या ललाई ) को छोड़कर इस समय मानो प्रचण्ड अग्नि एवं जल वाले कठिन व्रत का आचरण कर रहा है, जो ( अधर ) काम का प्रवेश होने से विवश और पञ्चम उद्गार ( स्वर ) के श्रवण से आवर्तित ( विवृद्ध ) उष्ण उच्छ्वासों से बार-बार सन्तप्त तथा चारों ओर से गिरते हुये नेत्र-जल से सिक्त हो रहा है ॥ २३ ॥

## प्रच्छन्न सम्भोग का उदाहरण—

विभिन्न प्रकार के सुरत व्यापारों से प्रिय के प्रेमपूर्वक संलग्न हो जाने पर मृगशावक के समान आँखों वाली [ नायिका ] ने गुप्त सकेतस्थल पर भी रस से ऐसा शब्द किया कि उनका शयनीयस्थान बहुसंख्यक लता पक्षियों के कूजन से युक्त हो गया ॥ २५ ॥

## प्रकाश विप्रलम्भ का उदाहरण—

उस मानिनी की, केले के समान ग्रीवा को कुछ टेढ़ी कर देने से चलायमान

बड़े-बड़े स्तनों के प्रावर्तनरूपी व्यायाम से शोभित चोली, उसका ( नायिका का ) वह अवलोकन, काम को बढ़ानेवाली चातुर्यपूर्ण, मुग्ध और मधुर वे बातें—ये सभी अभिमत ( अभीप्सित ) क्रियायें बड़े पुण्य से प्राप्त होती हैं। अरे मन ! तुम [ उन्हें ] स्मरण कर रहे हो क्या ? २६ ॥

**नायक का निरूपण—**

त्यागी, कुलीन, रति-कार्यों में कुशल, कल्प ( योग्य ), कलाकार, युवा, धनाढ्य, भव्य, क्षमाशील, सुन्दर, अभिमानी और स्त्रियों के मन को जानने वाला [ पुरुष ] नायक होना चाहिये ॥ २७ ॥

**नायक के भेद—**

क्रिया के आधार पर उस ( नायक ) के १. अनुकूल, २. दक्षिण, ३. शठ और ४. धृष्ट—इस प्रकार चार भेद यहाँ पर बताये जा रहे हैं। उनके सुन्दर उदाहरण भी दिये जा रहे हैं—॥ २८ ॥

**अनुकूल [ नायक ] का लक्षण—**

जो अपनी स्त्री के प्रति सदा अनुकूल और अन्य स्त्री से विमुख रहे, वह अनुकूल नायक कहलाता है। जैसे—सीता के प्रति राम। जैसे—॥ २९ ॥

**अनुकूल [ नायक ] का उदाहरण—**

[ नायिका अपनी सखी से कह रही है—] हे सखि ! न तो मेरे वस्त्र ही सुन्दर हैं, न गले का आभूषण ही चमकीला है, न अठखेलियों से युक्त [ मेरी ] चाल है, न हँसने में कोई अल्हड़पन है और न मुझमें कोई मद ( मस्ती ) है ( अर्थात् प्रिय को रिझाने वाली कोई भी बात मुझमें नहीं है। ) फिर भी, लोग ऐसा ही कहते हैं ( मैं तो जानती ही हूँ ) कि सुन्दर होते हुए भी इसका प्रिय दूसरी नायिका की ओर दृष्टि नहीं डालता। इतने से ही मैं अपने अतिरिक्त सारे संसार को दुःखी मानती हूँ ॥ ३० ॥

**दक्षिण [ नायक ] का लक्षण—**

जो अन्य ( स्त्री ) में चित्त ( अनुरक्ति ) वाला होते हुए भी पहली स्त्री के प्रति गौरव, भय, प्रेम और दाक्षिण्य के भाव का त्याग नहीं करता, वह दक्षिण नायक कहलाता है। जैसे—॥ ३१ ॥

**दक्षिण [ नायक ] का उदाहरण—**

[ कोई सखी नायिका से कहती है—] हे सखि ! इसकी ( नायक की ) नम्रता

वही है, वही वाणी है, वही क्रीड़ा-सम्बन्धी क्रियायें हैं, वही भय है, पूर्व प्रेम के अनुरूप वही मधुर नर्मव्यापार हैं, फिर भी अपने प्रियतम का अप्रिय चाहने वाली आप उसे दोषकलुषित ही बताती हैं। इस प्रकार दिन-रात आपका मन चिन्ता से दोलायमान रहता है। इससे क्या लाभ है? ३२ ॥

शठ [ नायक ] का लक्षण—

जो सामने प्रिय बोलता है और पीठ पीछे अत्यन्त अप्रिय कार्य करता है, अपराध करने पर भी चेष्टाओं से वैसा ज्ञात नहीं होता, वह शठ नायक कहा गया है। जैसे—॥ ३३ ॥

शठ [ नायक ] का उदाहरण—

मृगनयनी ( नायिका ) के दोनों नेत्र दोनों कानों के पास निश्चय ही यह पूछने के लिये गये हैं कि हम दोनों तो सरल और तरल हैं और आप दोनों यहाँ बहुश्रुत ( बहुज्ञ ) हैं। आप लोग ही ठीक-ठीक आदेश दें कि इस अपराधी प्रेमीजन ( नायक ) में हम लोगों का रमण करना उचित है या नहीं? ३४ ॥

यद्यपि नायक संकोच से विनीत है, फिर भी, नायिका क्रोध के कारण बालों को खींच कर शीघ्रता से उसे रमणकक्ष में ले जाती है, हार से [ उसे ] अच्छी तरह बाँध देती है। रुंधे कण्ठ से 'फिर उसके घर जाओगे?' ऐसा बार-बार कहती हुई कान में लगाये कमल से उसे मारती है। यह स्थिति किसी पुण्यवान् को ही प्राप्त होती है ॥ ३५ ॥

धृष्ट [ नायक ] का लक्षण—

अपराध करके भी निःशङ्क रहने वाला, [ नायिका के हाथ से ] मार खाकर भी निर्लज्ज रहने वाला और अपराध पकड़ा जाने पर भी झूठ बोलने वाला [ पुरुष ] धृष्ट नायक कहा जाता है। जैसे—॥ ३६ ॥

धृष्ट [ नायक ] का उदाहरण—

हे सखि! क्रोध से कठोर वचन बोलती हूँ, फिर भी वह ( नायक ) बलात् मेरे मुँह को चूम लेता है; अनेक बार मारने पर भी तत्काल मेरे हाथ को अपने हाथ में पकड़ लेता है; सखियों के सामने भी पाद-प्रहारों को नम्रतापूर्वक सर पर सहन कर लेता है, फिर भी समझ में नहीं आता कि प्रणयवती मैं इस समय उस पर क्यों क्रोध कर रही हूँ? ३७ ॥

'हे धूर्त! तुम्हें धिक्कार है। [ तुम अपनी ] उसी प्रेमिका का सेवन करो जिसके पद-तल के आघात को तुम्हारी छाती पर अङ्कित महावर का चिह्न बता रहा है।'

ऐसा कहे जाने पर भी जब झूठ बोलने मे कुशल यह दुष्ट मेरे पैरों को नहीं छोड़ रहा है तो हे सखि ! मै इससे अधिक क्या करूँ ।। ३८ ।।

**नर्मसचिव का लक्षण—**

मन्त्र ( गुप्त बात ) का छिपाने वाला, शुचि (पवित्र), वाग्मी, भक्त, नर्मव्यापार मे चतुर और कुद्ध स्त्री का प्रसन्न करने वाला ( पुरुष ) उसका ( नायक का ) नर्मसचिव होता है ।। ३९ ।।

पीठमर्द, विट और विदूषक—ये तीन प्रकार के [ नर्मसचिव होते है । ] इनमें से पहला अर्थात् पीठमर्द नायिका और नायक का अनुगमन करने वाला होता है ।। ४० ।।

[ किसी ] एक विद्या मे निपुण [ नर्मसचिव ] विट कहलाता है, और प्रायः क्रीडा करने वाला, अपने शरीर, वेष तथा भाषा से हास्य उत्पन्न करने वाला एवं अपने कर्म को ठीक से जानने वाला [ नर्मसचिव ] विदूषक कहलाता है ।। ४१ ।।

प्रबन्धो ( काव्यो ) मे इनका व्यवहार प्राय. प्रचुरता से होना चाहिये । प्रत्येक के बहुत उदाहरण है, फिर भी निर्देश के रूप मे कुछ ही [ यहाँ ] दिये जा रहे है ।।४२।।

**पीठमर्द का उदाहरण—**

इस मान को छोड़ो; मित्रो की अच्छी बात को सार्थक करो, काम से उत्पन्न सन्ताप से अङ्गों को व्यर्थ क्यो गला रही हो; अब अपने पैरो पर पड़े हुये प्रिय का सम्मान करो । हे मुग्धे ! जो कालरूप हरिण चला जाता है, वह लौट कर नहीं आ सकता ।। ४३ ।।

**विट का उदाहरण—**

हे मनस्विनि ! उस प्रेमी नायक पर तुम अधिक मान मत करो । युक्तायुक्त [ विचार ] के बिना उसके साथ इससे अधिक तुम्हारा मान क्या होगा ? [ यह समय मान करके ही मत खो दो नहीं तो तुम्हें ] अभी अभी यह सरस कमलिनी के कन्द के टुकड़े जैसी शोभा वाला चन्द्रमा भी प्रलयाग्नि के तुल्य [ जलाने वाला ] हो जायेगा ।। ४४ ।।

**विदूषक का उदाहरण—**

हे मिथ्या-सौन्दर्य का अवलम्बन करने वाली ( नायिके ) ! अब प्रिय पर क्रोध करना व्यर्थ है, क्योकि तुम्हारे अत्यन्त उष्ण उन निःश्वासो ने तुम्हारी उत्कट कामाग्नि को दूर से ही स्पष्ट रूप से बता दिया है, जो ( निःश्वास ) तुम्हारे हृदय से अंकुरित हुये हैं, कण्ठ में विकसित हुये है, और मुँह मे बलात् लुढ़कते हुए सकीर्ण नासिका-छिद्रो से सीधे होकर निकल रहे हैं, ।। ४५ ।।

